प्रथममुद्रणम् १००० प्रतयः





## संशोधकविद्वद्वृन्दः

श्री. पं. पू. रामाचार्य कट्टी
( श्री. श्री. सत्याभिज्ञतीर्थश्रीचरणानां पूर्वाश्रमतनूजाः )

श्री. पं. पू. रंगाचार्य गुत्तल
( श्री. श्री. सत्यप्रमोदतीर्थश्रीचरणानां पूर्वाश्रमतनूजाः )

श्री. पं. पू. हयग्रीवाचार्य गुत्तल

श्री. पं. रंगाचार्य कलापूर
श्री. पं. गोपालाचार्य माहुली
श्री. पं. नरसिंहाचार्य वालकोंडा
श्री. पं. केशवाचार्य कट्टी
श्री. पं. मध्वाचार्य चितामणि
श्री. पं. माधवाचार्य कट्टी
श्री. पं. राममूर्त्याचार्य तिरुपति
श्री. पं. रंगनाथाचार्य हेब्बणी
श्री. पं. भीमसेनाचार्य वरखेडकर



मुद्रकः
वरखेडकरोपाह्वबाळाचार्यतनूजो अनंतयः
सुधामुद्रणमन्दिरम्
उत्तरादिमठीयावारः, बसवनगुडी
बेंगलूर ५६०००४



*This book is Published*
*with the financial assistance of*
*Tirumala Tirupati Devasthanams*
*Under thier scheme*
*aid to publish religious books*

अनु०— शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ॥
अतोऽन्विताभिधायित्वम्

सु०— अतोऽनियतनिमित्तकत्वादौत्प्रेक्षिक एव वाक्यार्थबोध इत्यप्रामाण्यं वेदस्येत्य
ह ॥ शक्तिश्चेति ॥ चशब्दोऽतःशब्दव्याख्यानान्तरसमुच्चयार्थः, यत इत्यर्थे वा । ए
ब्दस्यान्वित एवेति संबन्धः । अयमर्थः । वृद्धव्यवहारादिना हि शब्दशक्त्यवधारणम्
च पदार्थस्वरूपमात्रे व्यवहारादिकं युज्यते, किन्तु पदार्थान्तरान्विते । अतो व्यवहारादि
ब्दशक्तिमवधारयताऽर्थान्तरान्वित एव स्वार्थोऽनुभूयत इत्यङ्गीकरणीयम् । यद्यप्येकस्मि
ोगे गौरानयनान्वितः प्रतीयतेऽपरस्मिन्बन्धनान्वितोऽन्यस्मिंश्च दर्शनान्वित इति पदार्थान्तर
न्वयव्यभिचारः; तथाऽप्यव्यभिचारिणि योग्येतरान्विते स्वार्थे शक्तिग्रहणमुपपद्य
। न हि विशेषाणां व्यभिचारेण त्यागे सामान्यस्याव्यभिचारिणो निर्निबन्धनस्त्याग
यते । यत एवं व्युत्पत्तिसमयेऽन्वित एव स्वार्थे शब्दानां शक्तिरनुभूयतेऽतोऽन्वितस्वार्थ
धायित्वं शब्दानामभ्युपेयम् । शक्तिग्रहणानुरोधित्वादभिधानस्य ॥ यदा च पदैरेवान्वित
र्थप्रतिपादनं तदा वाक्यार्थ एवावबुद्ध इति कथं तद्बोधस्य निर्निबन्धनता । गुणप्रधान
वेनान्योन्यान्विताः पदार्था वा तदन्वयो वा वाक्यार्थ इति प्रामाणिकैरङ्गीकृतत्वादिति ।

वा०— यत इत्यर्थे वेति ॥ अस्मिन्पक्षे सन्निहितान्वयलाभ इति द्रष्टव्यम् । नन्वन्वि
त्यनुभवस्य परं प्रत्यसिद्धतया तदुपन्यासोऽनुचितोऽनुपपन्नश्चान्विते शक्त्यध्यवसायः । व्यभिचारादि
लोचनायां तदसंभवात् । अस्तु वाऽन्वितस्वार्थाभिधायकत्वं पदानाम् । तथाऽपि वाक्यार्थबो
यानुक्त्याऽसङ्गतिश्चेत्यत आह ॥ अयमर्थ इति ॥ व्यवहारादिना शब्दशक्तिमवधारयताऽनुभव
ामेनापि स्वीकर्तव्यत इत्यर्थः ॥ यद्यपीति ॥ तथा च सत्यपि तादृशव्यवहारे परीक्षकैर्व्यभिचा
र्थान्तरतदन्वयपरित्यागेनाव्यभिचारिणि स्वार्थमात्रे शक्तेः कल्पनीयतयाऽनुभवोऽसिद्ध इति भावः
; किमिति व्यभिचारिणोरपि पदार्थान्तरतत्संसर्गयोरनुमतं रूपमापाद्यानुगतशक्तिकल्पनानिर्बन्ध इत्य
स्थितसामान्यस्य परित्यागे विशेषस्यैव निमित्तस्य व्यभिचारादेरभाव एव तत्र निमित्तमित्याशयेनाह
न हीति ॥ उपलक्षणं चैतत् । अन्वयसामान्ये शक्त्यभावे विशेषजिज्ञासानुपपत्तिश्चेत्यपि द्रष्टव्यम्
ोऽत इत्युक्त हेतुहेतुमद्भावं घटयति ॥ शक्तीति ॥ असङ्गतिं परिहरति ॥ यदा चेति ॥ पदार्थान
वाक्यार्थत्वे तेषामनेकत्वाद्वाक्यभेदापत्तिरित्यतः प्रधानपदार्थस्यैकत्वान्नानुपपत्तिरित्याशयेनोक्तं गुणेति

वाक्यार्थबोधकरणप्रसङ्गे ध्वन्यादिविलक्षणवर्णसमूहात्मकपदग्रहणस्यैव युक्तत्वादिति भावः । यद्वा पदमिति पक्षे प्रकृतिप्रत्यययोरपि पदत्वमस्ति । तथाऽपि सुप्तिङन्तमित्यनुरोधेन तत्र पदव्यवहारस्य प्र त्वाभिप्रायेणैतदिति द्रष्टव्यम् ।

प०— **अनियतनियामकत्वादिति** ॥ शक्तिरूपनियतनिमित्तकत्वाभावादित्यर्थः । औ एव उत्कटैककोटिकसंशयरूप एवेत्यर्थः ॥ **व्याख्यानान्तरेति** ॥ अन्वितार्थबोधकत्वार्थकत्वरूपव्य नान्तरेत्यर्थः ॥ **अनुभूयत इति** ॥ शब्दशक्तिरिति योज्यम् । चशब्दो यत इत्यर्थ इत्युक्त तद्व्यनक्ति ॥ **यत एवमिति** ॥

या०— **अनियतनिमित्तकत्वादिति** ॥ शक्तिरूपनियतनिमित्ताभावादित्यर्थः ॥ **अप्रा मिति** ॥ संसर्गप्रमितिजनकत्वाभावः प्राप्त उत्प्रेक्षायाः प्रमितत्वादित्यर्थः ॥

श्री०— **औत्प्रेक्षिक एवेति** ॥ मेघसन्देशादाविव वाक्यार्थबोधस्योत्प्रेक्षामूलकत्वमेवेति तत्प्रमापकत्वं नास्तीत्यर्थः ॥

च०— **अनियतनिमित्तकत्वादिति** ॥ शक्तिप्रतिसन्धानात्मकनियतनियामकराहित्य भावः । औत्प्रेक्षिकः संभावनात्मकः । विशेषाणां व्यभिचारेण बन्धनत्वानयनत्वादिविशेषधर्मा न्नानां व्यभिचारेण । सामान्यस्य योग्येतरत्वरूपसामान्यधर्मावच्छिन्नस्य ।

सु०— अत्र पदानामित्यनभिधाय शब्दानामिति वदता प्रकृतिप्रत्यययोरप्यन्वि धानसामर्थ्यं सूचितम् ।

केचिदाहुरेकमेव पदमन्विताभिधायीतराणि तु पदानि तत्प्रतियोगिसन्निधापनमा व्याप्रियन्ते । तच्च प्रथमं वा प्रधानं वेति । तन्निरासार्थं शब्दानामिति बहुवचनम् ॥ तथा यदेकत्र प्रयोगे प्रथमं तदेवान्यत्राप्रथममन्यत्र तु प्रथममिति न पदानां प्राथम्यनियमोऽ तथा च प्रथमं पदमिति वदता सर्वाण्यप्यन्विताभिधायीन्यङ्गीकृतानीति किमत्र वक्तव्य प्रधानत्वमपि पदस्य किमुच्यते । यदर्थप्रतिपादनपराणीतरपदानि तत्प्रधानमिति चेत्, वाक्यभेदेन प्राधान्यस्याव्यवस्थितत्वात्सर्वपदानामन्विताभिधानसामर्थ्यमेवायातम् । आ

प्रधानमिति चेन्न, दध्ना जुहोतीत्यादिगुणविधानेष्वनुपपत्तेः । आख्यातपदरहितेष्वप्य
प्रत्ययदर्शनाच्च । न हि परिणतिसुरसं पनसफलमित्यादावन्वयो न प्रतीयत इति युक्तम्
नवविरोधात् । न च तत्राध्याहारः । स हि लोकप्रतीत्यनुरोधाद्वाऽऽश्रयणीयः स्वसमया
ग्राद्वा । नाद्यः लोकप्रतीतेः पर्यवसितत्वात् । न द्वितीयः तस्यैव निर्मूलत्वात्
ान्तरानुरोधेन तत्परित्यागस्यापि संभवात् ।

ये तु विशेषान्वाय एव शक्तिः पदानामित्यास्थिषत, तन्मतनिरासायान्वित इति
न्येनोक्तम् । उपपत्तिं तु वक्ष्याम इति ।

वा०—**बहुवचनमिति** ॥ अन्यथा 'स्वत एवागमस्य हि, वाक्यं प्रत्यक्षवत्प्रमे'त्यादाविवात्रापि
ग्रासैकवचनमेव प्रयुञ्जीतेति भावः । प्राथम्यप्राधान्ययोरन्विताभिधायकतानियामकत्वे तयोः प्रयोग
ण बहुशब्देष्वपि सत्वात्सर्वेषामन्विताभिधायकत्वं प्राप्तमिति बहुवचनेन सूचितां युक्तिमुपपादयति
॥ **हीति** ॥ प्राथम्यानियमस्येव प्राधान्यानियमस्य परं प्रत्यसिद्धतया तमुपपादयितुं प्राधान्यस्वरूप
ते ॥ **प्रधानत्वमपीति** ॥ अरुणयेत्यादौ सकलकर्मकरणावच्छिन्नक्रयस्यैव प्राधान्येन प्रतिपादना
गादीनां तदन्वयितया प्रतिपादनादाख्यातपदं प्रधानमिति शङ्कते ॥ **आख्यातपदमिति** ।
ातोपेतक्रियापदमित्यर्थः ॥ **दध्नेति** ॥ क्रियापदस्य गुणाश्रयसमर्पकतया गुणवाचकदध्यादिपदा
ऽप्राधान्यमिति भावः । एवं शब्दानामिति प्रकृतिप्रत्ययसूचितभावमभिधायान्वित इत्यस
नकशब्दतया संबन्धिविशेषोपादाने कर्तव्ये तदकरणेन सूचितं भावमाह ॥ **ये त्विति** ॥ **उपपत्ति**
॥ पदान्तरवैयर्थ्यपरस्पराश्रयत्वानन्त्यप्रयुक्तशक्तिग्रहाशक्यतादिरूपानुपपत्तिमनुपदमेव तदीयतत्सम
िरासपूर्वकस्वीयतत्समाधानकथनावसरे वक्ष्याम इत्यर्थः ।

स०—**आख्यातपदं प्रधानमिति चेदिति** ॥ क्रियानिष्पत्त्यर्थत्वेनैव कारकापेक्षणात् क्रिया
व विधेयपरत्वाच्च तस्येत्यभिप्रायः ॥ **दध्ना जुहोतीत्यादीति** ॥ अत्र जुहोतीति यत्तद्धोत्यर्थस
ृततत्वेन क्रियापदस्य दधिलक्षणगुणभूतकारकविधानार्थत्वेन अनुवादपरत्वान्न प्राधान्यमिति भावः

प०—**तर्हि वाक्यभेदेनेति** ॥ गामानयेत्यादिवाक्ये आनयनपदार्थप्रतिपादनपरत्वेपि गोपदस
शुक्ला कुब्जा बहुक्षीरेत्यादिवाक्यान्तरे च गोरूपार्थप्रतिपादनपरत्वमन्येषामित्येवं रूपेण प्राधान्यस
ावक्षाभेदेनाव्यवस्थितत्वादित्यर्थः ॥ **दध्ना जुहोतीत्यादिगुणविधानेष्विति** ॥ गुणो नाम याग

साधनद्रव्यम् । अग्निहोत्रप्रकरणे श्रुतमिदं वाक्यं जुहोतीत्यनेन प्रकरणप्राप्तहोममनूद्य जुहोति तत् दध्ना दधिरूपद्रव्येणेति गुणं विदधातीत्याख्यातांतपदस्यानुवादत्वेन गुण एव तात्पर्यात् प्राधान्यादिति भावः । यवाग्वा जुहोति पयसा जुहोतीत्यादिरादिपदार्थः ॥ **वक्ष्याम इति** पादे उभयव्यपदेशादित्यस्यानुषङ्गिकार्थोक्तिप्रस्तावे । कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात् धर्मसामान्यवेदनात् । 'विशेषधर्ममन्विच्छन्किमित्येव हि पृच्छति । गुणक्रियादिधर्माणां विशे पुनः । निराकाङ्क्षो भवेद्यस्माच्छब्दा अन्वितवाचकाः ।' इत्यत्रेति भावः ।

या०—**आख्यातपदमिति** ॥ क्रियानिष्पत्त्यर्थत्वेनैव कारकापेक्षणात्क्रियापदस्य विधे प्राधान्यं तस्येत्यभिप्रायः ॥ **दध्ना जुहोतीति** ॥ अत्राग्निहोत्रं जुहोतीति प्राप्तं होममनूद्य गुणविधानात्क्रियापदस्य दधिलक्षणकारकविधानार्थत्वेनानुवादत्वान्न प्राधान्यमिति भावः । दूर्ध्वमाघारयतीत्यादिकं ग्राह्यम् । तत्राप्याघारयतीत्यादिना प्राप्तमाघारादिकमनूद्योर्ध्वं विधीयते ॥ **वक्ष्याम इति** ॥ अनुपदमेवेति शेषः ॥

श्री०— **दध्नेति** ॥ तत्र जुहोतीति यत् तत् दध्नेत्येवं जुहोतीत्यनुवादेन दधि विधानादाख्यातपदं न तत्र प्रधानमिति भावः । तदेव दर्शयति ॥ **न हीति** ॥

च०— सन्निधानमात्र एव उपस्थापनमात्र एव ॥ **आख्यातपदमिति** ॥ लकारप्र पन्नमित्यर्थः । अरुणयेत्यादौ कर्मकरणादिनिखिलकारकावच्छिन्नक्रमस्यैव प्राधान्येन प्रतिपादन दीनां तदन्वयितया प्रतिपादनाल्लकारप्रकृतित्वापन्नस्यैव प्राधान्यमिति भावः ॥ **दध्नेति** ॥ दध्यादिरूपविधेयबोधकपदस्य तत्र प्राधान्येन अग्निहोत्रं जुहोतीति वाक्यविहितोद्देश्यभूततदाश्रय क्रियापदस्येति भावः ॥ **आस्थिषतेति** ॥ प्रत्यज्ञासिषुरित्यर्थः । आङः स्थः प्रतिज्ञान इति **वक्ष्याम इति** ॥ समनन्तरमित्युपस्कर्तव्यम् ॥

**सु०— ननु यदि गामानयेत्यादिवाक्ये गामिति पदेनैवानयनान्वितः स्वार्थोऽ स्तदाऽऽनयेति पदं व्यर्थमुक्तार्थत्वात् । आनयेति पदेनानयत्यर्थेऽभिहिते सत्यानयत्यः स्वार्थो गोपदेनाभिधीयते । तेनानयेति पदस्य न वैयर्थ्यमिति चेत् । तर्ह्यानये केवलं स्वार्थमात्रमाचक्षाणमनन्विताभिधायि प्राप्तम् । यथा चेदमनन्विताभिधा पदान्तरमपि स्यादिति दत्तजलाञ्जलिरन्विताभिधानवादः । अथानयेति पदेनापि गोप हितेनार्थेनान्वितः स्वार्थोऽभिधीयते तदा यावत्पूर्वं पदं स्वार्थं, नाभिधत्ते तावत्तदु**

र्वपदार्थान्वितस्वार्थाभिधानं नास्ति । यावच्चोत्तरपदं स्वार्थं नाभिधत्ते तावत्पूर्वपदस्योत्तरपद ान्वितस्वार्थप्रतिपादनं न संभवतीत्यन्योन्याश्रयत्वम् । न च वाच्यं परस्परनिरपेक्षाणि पदा थमं पदार्थाननन्वितानभिधाय पश्चादन्योन्यान्वितांस्तानेवाभिदधतीति क्वेतरेतराश्रयत्वमिति ्रभिधानकल्पनाया अप्रामाणिकत्वात् । अचेतनेषु विरम्य व्यापारानुपपत्तेश्च ॥ किः दानामन्वितेष्वर्थेषु शक्तिर्गृहीता चेत्तथाविधानेव प्रथममभिदध्युः । न चेत्पश्चादपि कथमभि ध्युरिति ।

वा०—अत एव विशेषान्विताभिधाने एतद्दोषप्रसरेऽपि सामान्यान्विताभिधाने न तत्प्रसर इ कुं सामान्यविशेषान्विताभिधानयोः साधारणशङ्कां दर्शयति ॥ **नन्विति** ॥ ननु गामानयेत्यत्रानयेत्य नयत्यर्थेऽनभिहितेऽपि गोपदमानयत्यर्थान्वितं स्वार्थमभिधत्तेऽभिहित एव वा । नाद्य इत्याह ॥ **यदीति** **क्तेति** ॥ आनयेतिपदबोधनीयानयत्यर्थस्यान्वयप्रतियोगितया गोपदेनैव बोधनादित्यर्थः । न ामान्यान्विताभिधानपक्षे एकेन पदेन योग्येतरान्वितस्वार्थमात्राभिधानेऽपि विशिष्यानयेत्यर्थान्वि ार्थानभिधानात्तदभिधानाय पदान्तरसार्थक्यात्कथं तत्पक्षेऽयं दोष इति वाच्यम् । पदान्तरसार्थक्याय श्याङ्गीकर्तव्यविशेषान्विताभिधानेऽपि पदान्तरेण विशेषेऽभिहित एवान्येन तदन्वितमभिधीयतेऽनभिहि त्यभिहितानभिहितविकल्पदोषयोस्समत्वादिति भावः । द्वितीयं शङ्कते ॥ **आनयेतीति** ॥ आनये ं केवलं स्वार्थं बोधयत्युत गवान्वितम् । आद्य आह ॥ **तर्हीति** ॥ द्वितीयं शङ्कते ॥ **अथेति** ापदाभिहितेनेति विशेषणमन्योन्याश्रयस्फुटीकरणायेति ध्येयम् । ननु प्रथमं पदानां परस्परनिरपेक्षा ेवलस्वार्थाभिधायकत्वान्नेतरेतराश्रयत्वम् । पश्चादन्विताभिधायकत्वान्नापसिद्धान्तश्चेत्याशङ्कते ॥ **ाति** ॥ **द्विरभिधानेति** ॥ पदत्वप्रयोजकाभिधायकत्वस्यैकवाराभिधानेनैवोपपत्तेरिति भावः । न केव ्रभिधानं प्रमाणशून्यमुपपत्तिविरुद्धं चेत्याह ॥ **विरम्येति** ॥ ननूभयशक्तियुक्तस्यापि पुरुषस्यैकानन्त न्यकार्यस्येवोभयाभिधानशक्तानामपि पदानामेकानन्तरमन्याभिधानाङ्गीकारे न कोऽप्युपपत्तिविरे त्यतः पुरुषस्य चेतनत्वादिच्छाक्रमेण कार्यक्रमसंभवेऽपि नाचेतनपदेषु तत्संभव इत्याशयेनोक्तम् **दानामिति** ॥ अचेतनेष्वित्येव क्वचित्पाठः ॥

स०— नात्र परस्पराश्रयावतारः परस्परनिरपेक्षाणि प्रथमं पदानि पदार्थावसंसृष्टानभिध श्चादन्योन्यान्वितांस्तानेव पदार्थानभिदधतीत्याह ॥ **न च वाच्यमिति** ॥ न केवलं द्विरभिधा ल्पनायां मानाभावः अपि तु प्रमाणविरोधश्चेत्याह ॥ **पदानामिति** ॥

प०— न च वाच्यमित्यस्य क्वेतरेतराश्रयत्वमित्यनेनान्वयः ।

श्री०— **उक्तार्थत्वादिति** ।। आनयेत्यर्थस्य गोपदेनैवोक्तत्वादित्यर्थः । नन्वानयेति येत्यर्थमात्रं नाभिधीयते । येनान्विताभिधानवादस्य दत्तजलाञ्जलित्वं स्यादित्याशङ्कते ॥ अ **पदेनापीति** ॥ आनयेति पदं केवलं स्वार्थमाचक्षाणमनन्विताभिधायिप्राप्तमित्युक्तमसदिति पूर्वपदं गोपदम् । स्वार्थं आनयनान्वितस्वार्थम् । उत्तरपदम् आनयेति पदम् । स्वार्थं गवान्वित तथा च गोपदस्यानयनान्वितस्वार्थाभिधायकत्वसिद्धावानयेति पदस्य गवान्वितस्वार्थाभिधायक स्तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इत्याशयः ॥ **विरम्यव्यापारेति** ॥ स्थित्वा स्थित्वा प्र रूपविरम्यव्यापारस्य चेतनधर्मत्वादित्यर्थः ॥ **गृहीतेति** ॥ अनुभूतेत्यर्थः ॥

सु०— अत्र विशेषान्विताभिधानवादिनः परिहारमाहुः । प्रथमं पदानि वशादनन्वितस्वार्थान्स्मारयन्ति । पश्चादितरेतरस्मारितेनार्थेनान्वितस्वार्थानभिदधतीति न्तरवैयर्थ्यम् । नापीतरेतराश्रयत्वमिति । एतदप्यसारम् । सर्वदैव हि पदान्यन्वितेनैव गृहीतसाहचर्याणि न केवलेन । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशते । यथ हि स्मरणेनोत्पत्तव्यम् । न तु परीक्षकप्रयोजनमनुसृत्य । न हि पदं पदार्थमात्रप्र प्र(युञ्ज/युज्यते । किन्तु व्यवहाराय । स चान्वित एवेत्यन्वितानामेव पदार्थानां स्मरणं स्यात् । तथा च गां पश्येति प्रयोगे गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मा पश्येति पदमनाकाङ्क्षितार्थमसङ्गतं स्यात् । एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्था कत्वात्पश्येति पदस्य न गोपदं तेन संबध्येत । तथा च वाक्यार्थः क्वापि परिनि सिध्येत् ॥ न च वक्तव्यमव्यभिचाराद्गोपदं स्वार्थमात्रं स्मारयति नार्थान्तराणि । तेषां चारित्वादिति । पदेष्वभ्यासादरप्रत्ययैराहितस्य संस्कारस्य प्रबोधत्व(य)तः स्मरणहेतुत्वात् बोधस्य च व्यभिचारिण्यप्यर्थान्तरे प्रणिधानसाहचर्यादिजन्मनोऽविशेषात् । न हि स्म मानमिवसाहचर्यं नियममपेक्ष्योत्पद्यते । धूमदर्शनादग्निवद्रसवत्पाकादिप्रदेशस्य स्मरणद

एतेनैतदपि निरस्तम् । यथा पदानां स्वार्थेष्वभ्यासातिशयो न तथाऽर्थान्तरेषु व्यभिचारित्वात् । तथा च स्वरूपमात्रेणैव पदेभ्यः स्मारिताः पदार्था आकाङ्क्षादिमन्त न्विता अभिधीयन्त इति न परस्पराश्रयत्वम् । नापि पदान्तरानाकाङ्क्षेति । स्मरणास्य वारनियमानपेक्षत्वात् । अन्यथा धूमदर्शनान्महानसादिस्मरणानुपपत्तिप्रसङ्गः । न हि न्धूमस्याग्नावभ्यासातिशयस्तावान्महानसे । तस्मादपरिहार्यमितरेतराश्रयत्वमिति ।

वा०— **साहचर्येति** ॥ स्वार्थैः सहेति शेषः । स्मारयन्तीत्युक्त्या द्विरभिधानकल्पनाऽपि नेति
ति । प्रथमं स्वार्थमात्रेण साहचर्यग्रहोऽनन्तरमन्वितेनेति साहचर्यग्रहक्रमात्स्मरणाभिधानयोः क्रम
शङ्कानिरासाय सर्वदैव हीत्युक्तम् । नन्वस्तु प्रथममन्वितेनैव साहचर्यग्रहस्तथाऽपि तथा स्मारकत्वे
रवैयर्थ्यापातेन स्वार्थमात्रस्मारकत्वं तेषां विचारे सत्यवसीयत इत्यत आह ॥ **यथानुभवं हीति** ।
तेनैव स्वार्थेन गृहीतसाहचर्याणीत्युक्तमुपपादयति ॥ **न हि पदमिति** ॥ नन्वस्त्वन्वितपदार्थ-
त्वं तथाऽपि को दोष इत्यतस्तर्हि त्वदुक्तकेवलस्मारकत्वहानिरिति दूषणे स्थित एव दूषणान्तर-
॥ **तथा चेति** ॥ यद्यप्यत्रैकेनैव पदेन यथास्मरणमन्वितस्वार्थाभिधानात्पदान्तरवैयर्थ्यं स्यादित्यपि
वक्तुमुचितं तथाऽपि तस्याभिधानमुखेन प्राप्त्या स्मारकत्वपक्षासाधारणदूषणेन तान्पक्षान्प्रदूष्या-
प्रकत्वपक्षमेव परिशेष्य तत्र पूर्वोक्तवैयर्थ्यान्योन्याश्रत्वादितादवस्थ्यव्युत्पादने तात्पर्यान्न तथोक्तमिति
म् । पूर्वानुभूतेत्यतःपूर्वं गामानयेति प्रयोग इति शेषः । एवमित्यतःपरं तस्मिन्नेव गां पश्येति
इति शेषः । एवं च गामानयेति प्रयोगे गोपदस्यानयनान्वितगोत्वेन साहचर्योपलम्भाद्गां पश्येति
ऽपि कारकाभिधायिगोपदमानयनान्वितमेव स्वार्थं स्मारयेदिति पश्येति पदमनाकाङ्क्षिताभिधानमसङ्गतं
। एवं तस्मिन्नेव प्रयोगे गोपदमपि पश्येत्यनेन क्रियावाचिनाऽनाकाङ्क्षितार्थस्मारकमसङ्गतं स्यात्
ते पदस्य प्रासादं पश्येति प्रयोगान्तरे प्रासादान्वितस्वार्थसाहचर्यदर्शनादिति भावः । उक्तामव्य-
सर्ववाक्येष्वतिदिशति ॥ **तथा चेति** ॥ ननु न साहचर्यमात्रं स्मारकत्वे तन्त्रमपि त्वव्यभिचरितं
एवं च स्वार्थेनेव पदार्थान्तरेणाव्यभिचरितसाहचर्याभावान्न तत्स्मारकत्वं किन्तु स्वार्थमात्रस्मार-
ति नाव्यवस्थेति शङ्कते ॥ **न चेति** ॥ भूयोदर्शनाद्याहितसंस्कारोद्बोधादिस्वसामग्रीप्राप्तस्मरणे
वारादिकमकिञ्चिकरमित्याह ॥ **पटु इति** ॥ सकृद्गृहीते तडिदादौ पटुप्रत्ययः कुण्डिकादावभ्या-
यः । अद्भुतेष्वादरप्रत्ययः । अभ्यासादरोऽभ्यासातिशय इति कश्चित् । तथाऽप्यबुद्धस्य न
जनकत्वमित्यतः प्रबोधवत इति । ननु व्यभिचारिणि स्मरणसामग्र्येव नास्तीत्यत आह ।
**ोधस्य चेति** ॥ प्रणिधानं मनोऽवधानम् । साहचर्यमेकदेशकालसंबन्धः । आदिपदेन लिङ्ग-
ाभ्याससादृश्यादिग्रहणम् ॥ **एतेनेति** ॥ संस्कारोद्बोधप्रयोजकोऽभ्यासेऽप्यतिशयितः स्वार्थ एवेति
त्रस्मरणमिति भावः ।

स०— **सहचर्यवशादिति** ॥ पदानां स्वार्थसहचर्यवशादेव तत्स्मारकत्वं न शक्तिवशादते
रभिधानादिति भावः । केचित्तु । ननु न प्रथममभिधायकानि येन द्विरभिधानं प्रसज्येत किन्तु
पदार्थेषु स्मृतिरेव जायते । साहचर्यदर्शनात् । सहचरितानि हि प्रथमं पदार्थैः पदानि

अनुभूतानि देवदत्तदर्शनादिव यज्ञदत्ते । अनन्तरं तु संसृष्टदशायां स्मारितानां पदार्थानां अ
मित्येतदाशङ्क्य परिहरति । अत्र विशेषान्विताभिधानवादिन इत्यादिनेत्याहुः । अन्वितपदार्थे स
मेवोपपादयति ॥ **न हि पदमिति** ॥ व्यवहारसमर्थसंसृष्टपदार्थैः साहचर्यात्तादृगर्थस्मारक
पदार्थमात्रस्मारकत्वमसिद्धमित्युक्तम् । अङ्गीकारे च दूषणान्तरमाह ॥ **तथा चेति** ॥ यदा गामा
प्रासादं पश्येति च पूर्वमन्वयो गृहीतः तदनन्तरं यदि तं प्रति गां पश्येति प्रयोगः तदा अत्रत्या
परस्परमनाकाङ्क्षितार्थं स्यादिति समुदायार्थः । उक्तामव्यवस्थां सर्ववाक्येष्वतिदिशति ॥ **तथा चे**
सहचर्याविशेषेपि पदार्थान्तरवैषम्यं शङ्कते ॥ **न च वक्तव्यमिति** ॥ व्यभिचारो हि भूयो दर्शनाद्य
संस्कारोद्बोधात्तु उत्पद्यमाना स्मृतिर्नान्वितपदार्थयोर्विशिष्य इत्याह ॥ **न त्वभ्यासेति** ॥ र
गृहीतेऽपि तटिदादौ पटुप्रत्ययः । घटादावभ्यासप्रत्ययः । अद्भुतेष्वादरप्रत्ययः । तथाप्यनुद्
न स्मृतिजनकत्वमिति ॥ **अतः प्रबोधवत इति** ॥ ननु भावनोद्बोधो न तथा व्यभिचारिणि
अव्यभिचारिणि पदार्थमात्र इत्यत आह ॥ **तत्प्रबोधस्येति** ॥ प्रणिधानसहचर्यादिभ्यो जन्म
तस्येत्यर्थः । आदिपदेनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रयिसंबन्धानन्तर्यवियोगैककार्यविरोधाति
व्याप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माणां संग्रहः । अयमर्थः । प्रणिधानं मनो
धानम् । सहचर्यं हस्तिहस्तिपदौ । अभ्यासो घटादौ लिङ्गाद्व्याप्तिसंस्कारस्य प्रबोधः । लक्षणं ध
छत्रादिचिह्नं राजादिसंस्कारोद्बोधकं सादृश्यं शुक्तिरजतादौ परिग्रहः स्वीकारः कलत्रादिसंस्क
एवमाश्रयाश्रयिणावपि परस्परसंस्कारस्य संबन्धः सहचारः । अनन्तर्ये पूर्वतनपदार्थसंस्कारस्य वियोग
कामिन्यादौ एकस्मादुत्पन्नकार्याणां अन्यतमदन्यसंस्कारस्य अविरोधः सर्पनकुलादौ अतिशयेनातिश
व्याप्यव्यापकयोः व्यवधानम् । प्रियतमान्यव्यवहिते सुखदुःखादि । तज्जातीयस्य तद्धेतोश्च
अर्थित्वमर्थनीये । क्रियारागः क्रियाशक्तिः । स्वविषयस्य धर्माधर्मौ । शुभाशुभविषयसंस्कारोद्बो
इति ॥ **रसवत्याकाशादिप्रदेशस्येति** ॥ महानसचत्वरादिप्रदेशस्येत्यर्थः ॥

प०— नन्वित्यादिना कृतचोद्यस्य वयं त्वित्यादिना परिहारमग्रे विवक्षुर्मतान्तरमनूद्य नि
अत्र **विशेषेति** ॥ **साहचर्यवशादिति** ॥ स्वस्ववाच्यपदार्थसाहचर्यवशादित्यर्थः ॥ **स्वार्थमात्रमि**
दार्थान्तरानन्वितं स्वार्थमित्यर्थः ॥ **नार्थान्तराणीति** ॥ आनयनबन्धनादिरूपार्थान्तराण्यन्वयप्रतियो
नूतानि नोपस्थापयति । गवादिपदप्रयोगवेलायामानयनपदप्रयोगस्य बन्धनादिपदप्रयोगस्य वा नैयत्याभ
षां व्यभिचारस्त्वादित्यर्थः । व्यभिचारिणि संस्कारबोधो वा कथमित्यत आह ॥ **तत्प्रबोधस्य चेति**
त्येतत्परास्तमित्यत्रैतेनेतिपरामृष्टं हेतुं व्यनक्ति ॥ **स्मरणस्येति** ॥ **वारेति** ॥ द्विवारं त्रिवारमित्य
ावृत्तिनियमेत्यर्थः । तथाच सकृदनुभवेप्यर्थान्तरस्मृतिर्भवत्येवेति भावः ॥

या० — **साहचर्यवशादिति** ॥ पदानां यद्यप्यर्थेन सामानाधिकरण्यरूपं साहचर्यं संभवति ऽपि स्ववाच्यैकदेशत्वरूपं संबन्धमात्रं साहचर्यपदेनात्र विवक्षितमिति ज्ञातव्यम् । तथा च पदा र्थस्मारकत्वमुक्तसंबन्धवशादेव न शक्तिवशादतो न द्विरभिधानमिति भावः ॥ **नापीति** ॥ अन्वि र्थाभिधायकत्वादिति भावः ॥ **तथा च गां पश्येतीति** ॥ येन गामानयेति प्रासादं पश्येति च पूर् यो गृहीतस्तं प्रति यदि गां पश्येतिप्रयोगस्तदा तत्पदद्वयं परस्परमनाकाङ्क्षितार्थं स्यादि दायार्थः ॥ **क्वापीति** ॥ पूर्वगृहीतसङ्गतिकपदोपेतेषु पूर्वगृहीतार्थकभिन्नवाक्येष्वित्यर्थः **यभिचारादिति** ॥ यद्वोपदं तदुक्तपदेन स्वार्थवदिति न्यायादन्यथा पदत्वस्यैवानुपपत्तेरित्यर्थः ऽभ्यासेत्यादि । पटुर्योऽभ्यासस्तस्य योऽतिशयस्तत्प्रत्ययैरित्यर्थः । यद्वा सकृदेवोत्पन्नो विद्युदादि यः पटुप्रत्ययः कुण्डिकादिप्रत्ययोऽभ्यासप्रत्ययोऽतद्गुप्रत्यय आदरप्रत्ययस्तैरित्यर्थः ॥ **प्रणिधानेति** धानं मनोऽवधानम् । आदिपदेन गौतमसूत्रोक्ताभ्यासलिङ्गलक्षणसादृश्यादिसङ्ग्रहः ॥ **रसवत्पाक प्रदेशस्येति** ॥ महानसादिप्रदेशस्येत्यर्थः ।

श्री० — **यथानुभवमिति** ॥ अन्वितेनैव स्वार्थेन साहचर्यस्य गृहीतत्वात्तदनुसारेणैव स्मरण पत्तव्यमित्यर्थः ॥ **परीक्षकप्रयोजनमिति** ॥ पदान्तरवैयर्थ्यपरिहारान्योन्याश्रयपरिहाररूपं प्रयोज र्थः । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशत इत्युक्तमुपपादयति ॥ **न हीति** ॥ **अन्वि नामेवेति** ॥ अन्वितत्वेनानुभूतानामेवेत्यर्थः ॥ **स्वार्थमात्रमिति** ॥ तथाच गोपदेन पूर्वानुभूतान न्वितस्वार्थस्य स्मारितत्वादित्युक्तमसदिति भावः ॥ **प्रत्ययैराहितस्येति** ॥ अनुभवैर्जन्यस्येत्यर्थः **ोधवत इति** ॥ उद्बुद्धस्येत्यर्थः । प्रणिधानं चिन्ता । सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोध े वचनादिति भावः ॥ **अविशेषादिति** ॥ अव्यभिचारिणि स्वार्थे व्यभिचारिण्यप्यर्थान्तरे समा दित्यर्थः । तथा च व्यभिचरितार्थान्तरस्मरणमपि भविष्यत्येवेति भावः । ननु स्मरणस्यानुमान हचर्यनियममपेक्ष्योत्पद्यमानत्वाद्गोपदस्य च स्वार्थमात्रेण नियतसाहचर्यसद्भावात्तत्स्मारकत्वमेव न नयनादिरूपव्यभिचरितार्थस्मारकत्वम् । तेनार्थेन गोपदस्य नियतसाहचर्याभावादित्यत आह ॥ **न रणमनुमानमिवेति** ॥ कुतो न हीत्यत आह ॥ **धूमेति** ॥ धूमस्य महानसप्रदेशेनाविनाभावाभाव दर्शनानन्तरं तत्स्मरणमनुभवसिद्धं न स्यादिति भावः । अभ्यासातिशयो नाम वारं वारं प र्थानुभवः ॥ **स्वरूपमात्रेणैवेति** ॥ स्मारिता इत्यन्वयः । न पूर्वमत इव साहचर्यवशात्पदा र्थस्मारकत्वमुच्यते । किं नाम पदानामभ्यासवशादेव स्वरूपमात्रेणैव परस्परमन्वितत्वेनैव पदार्थस त्वमुच्यत इति पूर्वमतभेदो द्रष्टव्यः । एतेनेत्युक्तं विशदयति ॥ **स्मरणस्येति** ॥ **अनुभवव**

**नियमेति** ॥ अनुभवावृत्तिनियमेत्यर्थः । अभ्यासातिशय इति यावत् ॥ **तस्मादिति**
साहचर्यवशादभ्यासवशाच्च केवलार्थस्मारकत्वरूपपक्षद्वयस्यानुपपन्नत्वादानयपदान्वितस्व
वाच्ये गां पश्येति वाक्यार्थपरिनिष्ठाया असंभवेन पदानामन्वितस्वार्थाभिधायकत्वमेव व
अपरिहार्यमेवान्योन्याश्रयत्वं पदान्तरवैयर्थ्यं चेत्यर्थः ॥

च०— **साहचर्यवशादिति** ॥ स्वबोध्यैकदेशसंबन्धादित्यर्थः । अर्थनिरूपितस
शब्देषु बाधात् । तथा च पदानां स्वार्थस्मृतिजनकत्वं दर्शितसंसर्गाधीनमेव न
न द्विरभिधानप्रसङ्ग इति भावः ॥ **क्वापीति** ॥ प्राक्तनसंसर्गग्रहविषयीभूतपदघटितेषु
वाक्यभिन्नवाक्येष्वित्यर्थः ॥ **अव्यभिचारादिति** ॥ तादात्म्येन गोपदत्वावच्छिन्नस
स्वार्थव्याप्यत्वादिति भावः । प्रणिधानं मनोवधानम् । साहचर्यमेकदेशकालसंबन्ध
साहश्यादिग्राहकम् ॥

**सु०— वयं तु ब्रूमः । स्यादिदं विशेषान्वितत्वाभिधानवादिनां दूषणम्
न्विताभिधाने तु नायं दोषः । प्रत्येकं हि पदान्याकाङ्क्षितसन्निहितयोग्येतरान्वि
समर्थानि न पदान्तरमपेक्षन्त इति नेतरेतराश्रयत्वम् । विशेषान्वयप्र
पदान्तरसमभिव्याहारोपयोगः । अत एव सामान्यान्विताभिधानवादे वाक्यार्थो
इति निरस्तम्, पदान्तरसमभिव्याहाराद्विशेषप्रतिपत्त्युपपत्तेः । येऽपि विशेष
माचक्षते तैरपि प्रतियोगिनां तदन्वयानां चाऽऽनन्त्यात्सङ्गतिग्रहण एव पुरुषायुष
सामान्योपाधौ शक्तिग्रहणमङ्गीकरणीयम् ॥ नन्वेवं तर्हि किमनया सामान्य
शक्त्याऽपि । पदानि स्वार्थमात्रे शक्तिमन्ति पदान्तरसमभिव्याहारवशाद्विशेषा
यन्तीत्यङ्गीकारोपपत्तेरिति चेन्न । सङ्गतिग्रहणसमये सामान्यान्विताभिधानशक्ते
पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविग्रम
इति ॥ ननु तथाप्यन्विताभिधाने समभिव्याहृतपदानां पुनरुक्तिदोष इति चेन्न,
आनयनान्वितो गौर्गवान्वितमानयनमित्यनयोर्हि स्फुटो भेदः ॥ आर्थिकी तु पुनर
यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् । विशेषप्रतिपत्त्यङ्गतयोपयोगाच्चेति ॥**

वा०— ननु विशेषान्वयप्रतिपत्त्यर्थं पदान्तरोपयोग इतरेतराश्रयत्वाभावप्रयो
पेक्षतायै सामान्यान्विताभिधायकत्वं च त्वयाऽपि कल्पनीयम् । मया चाव्यभिचारात्स्वा

स्परसमभिव्याहाराद्विशेषान्विताभिधायकत्वं कल्प्यत इति कल्पनायां न कोऽपि विशेष इत्यतः
नान्यशक्तिग्रहणप्राप्तसामान्यान्विताभिधानस्य त्वां प्रत्यावश्यकत्वात्तव कल्पनाधिक्यमेवेत्याह ॥
पीति ॥ यद्यप्यव्यभिचारात्स्वार्थमात्रस्मारकत्वं परोक्तमनुपदमेव निरस्तं सामान्यान्विताभिधानं
नुभवसिद्धमित्यप्युक्तं तथा च न साम्यप्रसक्तिः । तथाऽप्यस्मदभिमतसामान्यान्विताभिधानप्रयोजक-
नान्यशक्तिग्रहणं तवाप्युपजीव्यमिति कल्पनायमपि न साम्यमित्याशयेनैतदुक्तमिति ध्येयम् । यद्वा
शक्तिग्राहकप्रमाणस्य वृद्धव्यवहारादेर्विशेषविषयकतया सामान्यान्विते शक्तिग्रहानुपपत्तेः कथं
छक्त्यभ्युपगमेनोक्तदूषणपरिहार इत्यतः शक्तिग्राहकप्रमाणस्य विशेषविषयत्वेऽप्यावापोद्वापादिना
भेचरितविशेषानपहायाव्यभिचरितसामान्यान्वित एव शक्तेः परीक्षकैर्व्यवस्थापनात् । एवम्भावो
शेषान्विताभिधानवादिनाऽप्यङ्गीकार्य एव । अन्यथा विशेषान्विते शक्तिग्रहानुपपत्तिरित्याह ॥
पीति ॥ ननु पदान्तरसमभिव्याहाराद्विशेषान्वयप्रतिपत्त्यङ्गीकारे पदार्थशक्तिमात्रं किं नाभ्युपेयेता-
तशक्तिकल्पनापेक्षया केवलपदार्थशक्तिपक्षस्य लघुत्वात् । पदान्तरसमभिव्यवहारानुसरणस्य चोभयत्रा-
शेषादित्याशङ्कते ॥ **नन्विति** ॥ प्रथमं गृहीताऽपि गौरवात्कार्यान्वितशक्तिरिवान्यलभ्यत्वबाधकाद-
तशक्तिः परित्यज्यतामित्यत आह ॥ **पदान्तरेति** ॥ स्वार्थमात्रशक्तानां पदानां पदान्तरसमभिव्या-
ो विशेषत एवान्वयबोधकत्वोपयुक्तं शक्त्यन्तरमुत्पादयतीति मन्यसे आहोस्वित्तेन शक्त्यन्तरानुत्पादे
र्थमात्रशक्तानां पदानां सर्वथाऽन्वये शक्तिशून्यानामपि पदान्तरसमभिव्याहाररूपसहकारिवशादन्वय-
कत्वमिति । नाद्य इत्याह ॥ **पदान्तरेति** ॥ हीत्यस्य न्यायस्य प्रसिद्धतां सूचयति । द्वितीये-
तदेवोत्तरं पदान्तरेति । तदा सामान्यस्य सामान्यविषयकशक्तेर्विविशेषविषकत्वरूपे विशेषपर्यवसान
पदान्तरसमभिव्याहारो हेतुर्न पुनरविद्यमानशक्त्याधाने सर्वथाऽन्वये शक्त्यभावेऽपि विशेषान्वय
कत्व इत्यर्थः । अत एव पदान्तरसन्निधानाहितशक्त्यन्तराणीति पद्धतिरपि पदान्तरसन्निधानेनाहितं
सितं शक्त्यन्तरं शक्तिविशेषो येषां तानि पदान्तरसन्निधानप्राप्तविशेषविषयताकसामान्यशक्तीनीति
दिति व्याख्येया । तर्कताण्डवे तु पक्षान्तरसन्निधानमेवाहितशक्त्यन्तरलब्धसहकार्यन्तरं येषामित्यर्थ
क्तम् । केचित्तु पद्धत्यनुसारात्पदान्तरसमभिव्याहारस्य शक्त्यन्तराधायकत्वमेव; सुधा तु पदान्तर-
भिव्याहारात्पूर्वमन्वयसामान्ये शक्तिर्नेत्येतन्निषेधपरेति न विरोध इत्याहुः । तन्न । शक्तिद्वयाङ्गीकारे
वाद्विशेषपर्यवसान एव हेतुरित्यस्वारस्याच्चेति द्रष्टव्यम् । नन्वन्विताभिधानपक्षे गोपदेन गौरिव
ायनस्यानयेति पदेनानयनस्येव गोरप्यभिधानात्पुनरुक्तिरिति शङ्कते ॥ **नन्विति** ॥ पदद्वयेनोभयोप-
स्नेऽपि गोपदेनानयनप्रतियोगिकगोधर्मिककर्मत्वस्यानयेति पदेन च गोप्रतियोगिकानयनधर्मिकक्रिया-
गोपस्थापनात्तयोश्च भिन्नाभिन्नप्रतियोगिकानुयोगिककर्मत्वक्रियात्वयोरेकैकेनैवान्येनानुपस्थापनेनोप-

स्थापनीयान्वयभेदेनापौनरुक्त्यमित्याह ॥ **अन्वयेति** ॥ एतदेव विशदयति ॥ **आन**
नन्वन्वयद्वयस्यैकैकेनोपस्थापनेऽपि कारकपदोपस्थापितक्रियाप्रतियोगिककर्मत्वादेः क्रियायां का
गिकक्रियात्वेन विनाऽनुपपत्त्या तथा क्रियापदोपस्थापितकारकप्रतियोगिकक्रियात्वस्य कारके
योगिककर्मत्वादिना विनाऽनुपपत्त्यैकैकपदेनैकैकोक्त्यैवान्यथाऽनुपपत्त्याऽन्यस्यापि सिध्या पद
पुनस्तदभिधाने पौनरुक्त्यं स्यादेवेत्यतोऽन्यथाऽनुपपत्तिबललब्धस्याशब्दतया न शाब्दपौनरुक्त्य
**आर्थिकी त्विति** ॥ ननु तथाऽप्यन्यथाऽनुपपत्तिलब्धेऽप्यर्थे पूर्वत्वाभावेनानुपादेयता
स्यादेवेत्यतः सप्रयोजनत्वान्नानुपादेयतेत्याह ॥ **विशेषेति** ॥

**स० — सामान्यस्य विशेषपर्यवसान एव हेतुरिति** ॥ नन्वेवं पदान्तरसन्नि
शक्त्यन्तराणि । विशेष्यतोऽप्यन्वितान् स्वार्थानभिदधातीति पद्धतिविरोध इति चेत् । न ।
सन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामित्यर्थकत्वात्तद्वाक्यस्य अनयैव रीत्याऽहिकु
करणीयमपि विशेषतोऽन्वितार्थप्रतिपत्तिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीति
व्याख्येयम् । शक्तिद्वयाङ्गीकारे गौरवस्य वक्ष्यमाणत्वादिति द्रष्टव्यम् । यद्वा सुधाया एव
समभिव्याहारात्पूर्वं अन्वयसामान्ये शक्तिर्वेत्येतन्निषेधपरत्वेन तद्विरोधाभावादिति ध्येयम् । नः
भिधाने घटमानयतीत्यादौ कारकपदेनान्वयप्रतियोगितया क्रियायाः क्रियापदेनापि तत्प्रति
कारकस्याभिधानात् पौनरुक्त्यमिति शङ्कते ॥ **ननु तथापीति** ॥ आनयनान्वितो गौरित्युक्त्यैव ग
मानयनमित्यर्थस्य लब्धत्वेन पुनर्गवान्वितमानयनमित्यभिधाने आर्थिकी पुनरुक्तिरित्यत आह ॥
**त्विति** ॥ नन्वेवमपि पदान्तरवैयर्थ्यं एकेनैवोत्तरान्वितस्वार्थोपस्थापनात् विशेषणविशेष्यविपरिव
अवैयर्थ्ये दण्डो पुरुषः पुरुषस्य दण्ड इत्यत्राप्येकस्य वैयर्थ्यं न स्यादित्यत आह ॥ **विशेषप्रति
तयेति** ॥ पदान्तरसमभिव्याहाराभावे विशेषान्वयप्रतिपत्त्ययोगस्य पूर्वमुक्तत्वेन तदर्थतयो
न वैयर्थ्यं पदान्तरस्येत्यर्थः ।

**प० — पुरुषायुषेति** ॥ पञ्चमान्त्यपादे अचतुरविचतुरसुचतुरस्त्रीपुंसेत्यादिना पुरुषायुषेतिनि
त्साधुः ॥ **न पुनरविद्यमानशक्त्याधान इति** ॥ हेतुरित्यनुकर्षः । ननु पद्धतौ प्रत्येकं सामान्यतो
न्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोप्यन्वितान्स्वार्थान
तीत्युक्तत्वात् तद्विरोध इति चेन्न । पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं ये
पद्धतिवाक्यस्यार्थकथनेन विरोधपरिहारस्य तर्कताण्डवे द्वितीयपरिच्छेदेऽन्विताभिधानबाधकोद्धारप्रन

ात् ॥ **चोदनार्थो वाक्यार्थः** ॥ आर्थिकपुनरुक्तेरदोषत्वेपि पदान्तरं व्यर्थं तु स्यादित्यत आह
**शेषेति** ॥ तत्तद्विशेषोपस्थापनरूपप्रयोजनान्तरेण पदान्तरस्योपयुक्तत्वादित्यर्थः । यानि तु घटं नयत
ादौ कारकपदेनान्वयप्रतियोगितयाक्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात्पर्यो
ादित्यादीन्यन्विताभिधानबाधकानि तानि बाधकदशकोद्धारग्रन्थे तर्कताण्डवे निरस्तानि ॥ अनि
क्तेः ॥

**या०**— नन्वेवं पदान्तरसमभिव्याहारो व्यर्थः । न च विशेषान्वयप्रतिपत्त्यर्थं सः । पदान्त
ाभिव्याहारेण विशेषान्वयप्रतिप्रत्त्यनुकूलशक्त्यन्तराधानाङ्गीकारे विशेषान्विताभिधानवादस्यान
श्रयणीयत्वप्रसङ्गेन प्रथमत एव किमिति तदनङ्गीकार इत्यत आह ॥ **पदान्तरसमभिव्याहार इति**
त्रेवं पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधतीति पद्धत्या विशेष
न्वितार्थप्रतीतिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीत्यहिकुण्डलाधिकरणीयसुधया च विरोधः
ोभयत्र पदान्तरसमभिव्याहारेण शक्त्यन्तराधानस्योक्तत्वादिति चेन्न । अभ्युपगमवादेनैव त
ोक्तत्वात् । न चैवमन्ततो विशेषान्विताभिधानवादाङ्गीकारप्रसङ्गः । प्रभाकरमत इव तत्र स्वाभावि
करनङ्गीकारात् पश्चादाहितां शक्तिमुपेत्यापि विशेषान्वयप्रतिपत्तिरुपपादनीया । न तदर्थं तत्र प्रथम
स्वाभाविकी शक्तिः कल्पनीया । अन्योन्याश्रयत्वादतिप्रसङ्गादिति तद्ग्रन्थाभिप्रायः । वस्तुत
क्तिद्वयाङ्गीकारे कल्पनागौरवस्य वक्ष्यमाणत्वात्स्वाभाविक्याः सामान्यान्वयशक्तेरेव विशेषान्वयपर्य
ााङ्गीकारेणैव विशेषान्वयप्रतिपत्त्युपपादनं युक्तन्तरमित्येतद्ग्रन्थाशय इति न कोऽपि विरोधः । अ
पदान्तरसन्निधानमेवाहितशक्त्यन्तरलब्धसहकार्यन्तरं येषामित्यर्थकत्वात्पद्धतिवाक्यस्य परस्परसन्निधा
लब्धसहकारिभिरित्यर्थकत्वाच्चाहिकुण्डलाधिकरणीयसुधावाक्यस्येति न कोऽपि विरोध इत्याहुः
**वयभेदादिति** ॥ न चैवं वाक्यभेदप्रसङ्गः । पदार्थस्थानीयान्वयभेदेऽपि तद्बोधमात्रेण नैराकाङ्क्ष्य
ेन गोकर्मकानयनानुकूला कृतिरिष्टसाधनमिति वाक्यार्थीभूतान्वयस्याभेदेनैकवाक्यत्वसंभवात् । न
देनानयनान्वितो गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धत्वेन पुनः गवान्वितमानयनमित्यनेन
ाने आर्थिकी पुनरुक्तिः स्यादित्यत आह ॥ **आर्थिकी त्विति** ॥ नन्वथाऽपि वैयर्थ्यमित्
ह ॥ **विशेषप्रतिपत्तीति** ॥ पदान्तरसमभिव्याहाराभावे विशेषान्वयप्रतिपत्त्ययोगस्य पूर्वमुक्तत्वे
र्थकतयोपयोगान्न वैयर्थ्यं पदान्तरस्येत्यर्थः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ॥

**श्री०**— **स्यादिदमिति** ॥ अन्योन्याश्रयत्वं पदान्तरवैयर्थ्यं चेति दूषणद्वयं विशेषान्विताभि
ावादिनामेव स्यादित्यर्थः ॥ **सामान्योपाधाविति** ॥ असमदभिहिते योग्येतरान्वितस्वार्थरूप इत्यर्थः
**रुक्तीति** ॥ गोपदेनानयनान्वितो गौरित्युक्तेर्गवान्वितमानयनमित्यस्यापि तथैव लब्धत्वादानयेत्यनेना

पुनर्गवान्वितमानयनमित्यभिधाने पुनरुक्तिदोष इत्यर्थः । अत्र पुनरुक्तिः किं श नाद्य इत्याह ॥ **अन्वयभेदादिति** ॥ तमेवोपपादयति ॥ **आनयनेनान्वित इति आर्थिकी त्विति** ॥ अदूषणत्वेऽपि वैयर्थ्यं तु स्यादेवेत्यत आह ॥ **विशेषप्रतिपत्त** पत्तीत्यर्थः ॥ पदान्तराणामिति शेषः ।

च० — **पुरुपायुपेति** ॥ अचतुरविचतुरेतिसूत्रेऽजन्ततया निपातनात्साधु गामानयेत्यादौ गोपदप्रत्यायितान्वयएवानयपदेनापि प्रत्येतव्य इति पुनरुक्तिरित्याशङ्का कान्वयस्य गोपदेन लाभः गोप्रतियोगिकस्य त्वानयनपदेनेति न क्षतिरित्याह ॥ अ नन्वानयनान्विता गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धतया पुनरानयेत्यनेन तदवस्थमित्यत आह ॥ **आर्थिकी त्विति** ॥ **विशेषप्रतिपत्तीति** ॥ पदान्तरस विशेषरूपावच्छिन्नप्रतियोगिकान्वयप्रतिपत्त्ययोगस्य प्रागभिहिततया न पदान्तरनैरर्थ्यक

अनु० — गौरवं कल्पनेऽन्यथा ॥

**सु० — एवं स्वमतेन परिहारमभिधाय ये तु प्रत्यस्तमितवर्णपदा स्फोटाख्यं वाक्यार्थप्रतिपादकमित्याहुस्तन्मतं निराकरोति ॥ गौरवमिति ॥ निरवयं वाक्यं वाक्यार्थस्य बोधकमिति कल्पने; गौरवं स्यात् । वाक्यमेव क प्रमाणेन कल्पनीयम् , तस्य च वाक्यार्थप्रत्यायनशक्तिरपि कल्पनीयेति ।**

वा० — नन्तूत्तरत्रान्यथाकल्पने गौरवाभिधानमनुपपन्नम् । उपायान्तरेण व प्रति तत्संभवेऽप्यनियतनिमित्तकत्वादौत्प्रेक्षिको वाक्यार्थबोध इत्यप्रामाण्यं वेद प्रत्यन्विताभिधानानङ्गीकारेऽपि गौरवाप्रसरादित्यतो नेदं गौरवाभिधानं पूर्वपक्षिण स्यादपि तूपायान्तरवादिनो वादिनः प्रतीत्याशयेनोत्तरवाक्यमवतारयति ॥ **एवमिति** वर्णपदवाक्याखण्डपदवाक्यस्फोटभेदेन पञ्चव्यक्तिस्फोटाः वर्णपदवाक्यस्फोटभेदेन इत्यष्टौ स्फोटाः । अत एवोत्तरत्र पदार्थेत्यादिना पदस्फोटमपि व्युत्पादयिष्यति । त प्रतिपत्तिहेतोरेव प्रस्तुततया वाक्यस्फोटस्यैव तादृशत्वात्तस्यैवोपादानमुत्तरत्र पदस्फोटव्यु दित्यवधेयम् । यद्यपि तात्वादिस्थानोद्भववायवीयध्वनिविशेषाभिव्यक्तवर्णात्मकपदैः

स्फोटोऽभिव्यज्यते । स च व्यक्तौ वाक्यार्थं प्रत्यापयतीति खण्डवाक्यस्फोटोऽपि पराभिमत
खण्डवाक्यस्फोटपक्षस्य मुख्यतया तदभिमतत्वात्तदुपादानम् । प्रत्यस्तमितेत्यारोपितवर्ण
निरवयवमिति यावत् । यथा चैतत्तथा वक्ष्यते ॥

प०— प्रत्यस्तमितेत्यादिबहुव्रीहिः । गगनवदखण्डमिति यावत् । वाक्यशब्दितं
विभुद्रव्यं पदाभिव्यङ्ग्यमिति ज्ञेयम् ॥ **वाक्यमेवेति** ॥ वाक्यशब्दितं स्फोटरूपद्रव्यमेव धर्मि
मित्यर्थः ।

**या०— प्रत्यस्तमितेति** ॥ अपगतवर्णपदविभागमित्यर्थः । अखण्डमिति यावत् ।
विभागस्तु तत्राविद्यया कल्पित एवावभासत इत्याशयः ॥ **वाक्यमेवेति** ॥ पदसमुदाय
वाक्यरूपं स्फोटाख्यं तत्त्वमेकमस्ति । तदेव वाक्यार्थप्रतिपादकमित्याशयः ॥

च०— वाक्यस्फोटस्यैव वाक्यार्थप्रत्यायकतामुपगच्छतां वैयाकरणानां मतनिरास
योजयति ॥ **एवमिति** ॥ **प्रत्यस्तमितेति** ॥ द्वन्द्वगर्भतत्पुरुषगर्भबहुव्रीहिः । वर्णपदविभाग
मित्यर्थः । तद्विभागादिकं अखण्डस्फोटाख्यब्रह्मण्यध्यस्तमिति भावः । वैयाकरणमते वर्णपदवा
पदवाक्यस्फोटभेदेन व्यक्तिस्फोटपञ्चकस्य वर्णपदवाक्यस्फोटभेदेन जातिस्फोटत्रिकस्य चोरीकारे
ष्टकं तत्सिद्धान्तस्तथापि वाक्यार्थप्रत्यायनौपयिकतया वाक्यस्फोट एवानूदितः । उपरिष्टात्पदस्फो
तु प्रासङ्गिकमिति स्थितम् ।

**सु०— ननु कथं स्फोटस्याप्रामाणिकत्वं पदार्थवाक्यार्थप्रतिपत्त्यन्यथाऽनुपपत्त्या प
स्फोटयोः प्रतिपन्नत्वात् ॥ तथा हि ॥ यदि हि न पदातिरिक्तं वाक्यम्, पदं च न
रिक्तं तदाऽर्थप्रत्यय एव न स्यात् । वर्णा हि न प्रत्येकमर्थप्रत्ययमुपजनयन्ति तथाऽ
श्लेषवर्णवैयर्थ्यप्रसङ्गाच्च । समुदायश्च तेषां न संभवति एकवर्णसमयेऽन्यस्या
नित्यत्वेऽपि न तेषां प्रतीतिरनुवर्तते । अप्रतीयमानानां प्रत्यायकत्वे सर्वदा पदार्थप्रतीति
न हि प्रतीत्या प्रतीयमानानां सर्वथाऽप्रतीयमानानां च कश्चिद्विशेषः । न च पू
वर्णाः स्मृत्यारूढा अर्थप्रतीतिहेतव इति वाच्यम् । स्मृतीनामप्यनुभवानुसारेणक्र
ज्ज्ञानयौगपद्यप्रतिषेधाच्च । अथ पूर्वपूर्वसंस्कारसहितोत्तरोत्तरानुभवैराहितोऽतिपटीया
निखिलवर्णविषयामेकामेव स्मृतिमुपजनयतीति मतम् । तदा क्रमो न स्यात् । पौर्वाप**

क्रमो हि प्रतीत्यङ्गम् । स च देशतः कालतो वा वर्णेषु सर्वगतेषु नित्येषु न । बुद्धिक्रमस्तु वाच्यः । स चैकस्मृतिसमारूढानां वर्णानां नास्तीत्यर्थप्रत्ययानुपपत्तिः । नङ्गत्वे च सरो रसो नवं वनं राजा जारा नदी दीनेत्यादावर्थभेदप्रत्ययो न स्य वर्णेभ्योऽनुपपद्यमानोऽर्थप्रत्ययस्तदतिरिक्तं स्फोटमवस्थापयति । स च स्वरूपग्राहकेण नार्थप्रत्यायनशक्तिमानखण्ड एवावगत इति कथं कल्पनागौरवमिति ।

वा०— **एकेति** ॥ शान्तः कोलाहलः श्रुतपूर्वो गकारो नास्तीति प्रत्यक्षेण व भावत्वे सति कृतकत्वादित्याद्यनुमानेन सर्वदाऽनुपलब्ध्योच्चारणे सत्येवोपलब्ध्या च वर्णानामनि भावः । शान्तः कोलाहल इति प्रतीतेर्ध्वनिविषयत्वाच्छ्रुतपूर्वगकारो नास्तीति प्रतीतिर विप्रतिपत्तेः । अनुमानस्य च स एवायं गकर इति प्रत्यभिज्ञाबाधितत्वाच्छ्रोत्रं नित्यद्रव्यग्राह यवेन्द्रियत्वान्मनोवदिति प्रतिपक्षितत्वात्सर्वदाऽनुपलब्धेश्च व्यञ्जकाभावेनोपपत्तेर्वर्णानां नित आह ॥ **नित्यत्वेऽपीति** ॥ वर्णव्यञ्जकोच्चारणस्य प्रतिनियतत्वेनाशुतरविनाशित्वेन क्रामि तज्जन्यप्रतीतेरपि तादृशत्वेनैकप्रतीतिकालेऽपरप्रतीत्यभावादर्थप्रतीतिपर्यन्तमननुवृत्तेश्चेति भाव माऽस्त्वेकप्रतीतिकालेऽपरप्रतीतिर्मा च भूदर्थप्रतीतिपर्यन्तमनुवृत्तिः । तथाऽपि पूर्वं प्रत मात्रेणार्थप्रतीत्युपपत्तिरित्यत आह ॥ **अप्रतीयमानानामिति** ॥ ननु पूर्वं सर्वदा वर्णप्रतीतेर मेतदापादनं कथं च पूर्वं प्रतीतिसत्त्वेऽप्रतीयमानत्वोक्तिरित्यत आह ॥ **न हीति** ॥ अर्थप्रतीत पूर्वकालासत्त्वे पूर्वं जाताया अप्यकिञ्चित्करत्वमेवेति भावः । एकैकवर्णानुभवजन्यसंस्कार पेक्षाणामेव तत्तत्स्मृतिकारणतया यावन्तो वाक्यस्थितवर्णास्तावत्स्मृतिजनकत्वम् । तत्रापि भवजन्यत्वात्क्रामिकतावत्स्मृतिजनकत्वमेवोचितमिति पुनर्व्यवधानमेवेत्याशयेनाह ॥ **स्मृतीन** क्रमावधारणेऽपि युगपत्तावत्स्मृतिजनकत्वं वा प्रसज्येतेत्याशयेनाह ॥ **ज्ञानेति** ॥ चक्षुरा संस्कारस्य स्मृतिकारणत्वेऽपि संस्कारनिरपेक्षचक्षुरादेरवलोकनकारणत्वेऽपि मिलितयोः प्रत्यभि वन्मिलितानां संस्काराणामेकस्मृतिजनकत्वं न विरुद्धमित्याशयेन शङ्कते ॥ **अथेति** ॥ यद्य वर्णानुभवजन्यसंस्कारसचिवान्त्यवर्णसन्निकृष्टश्रोत्रेणाखिलवर्णविषयकैकानुभवजननसंभवात्तदाशङ्क तथाऽपि संस्काराणां स्मरणप्रत्यभिज्ञाने प्रत्येव कारणत्वेऽप्येतादृशानुभवं प्रति न कारणतेति तदनुभवस्यापि शक्तिस्मरणादिना व्यवहितत्वाद्वाऽनाशङ्कनमिति द्रष्टव्यम् । ननु समूहालम्ब विषयाणामप्येकपङ्क्त्युपविष्टानां क्रमवर्त्किं न स्यादित्यत आह ॥ **पौर्वापर्येति** ॥ एवं कर परिहाराय स्फोटस्य प्रामाणिकत्वमुपपाद्य तदीयार्थप्रत्यायनशक्तेरपि तदुपपादयति ॥ **स चेति**

**स०**— नन्वप्रतीयमानायां प्रत्यायकत्वेऽतिप्रसङ्गात्कदाचित्प्रतीतिरङ्गीकर्तव्या तेषां प्रतीत्यनु-
शाब्दबोधसमये कुत इत्यत आह ॥ **न हि प्रतीत्या प्रतीयमानानामिति** ॥ पूर्वं प्रतीत्य
ीयमानानां सर्वथा प्रतीयमानानां च को विशेषः । न कोऽपि । अतोऽतिप्रसङ्गस्तदवस्थ एव
भावः ॥ **अखण्ड एवेति** ॥ प्रत्यस्तमितवर्णपदविभाग इत्यर्थः । तेन नास्माकमुक्तप्रत्येक-
वेकल्पतद्दोषावकाश इति सूचयति ।

**प०**— अनित्यत्वमुपेत्याह ॥ **एकवर्णसमय इति** ॥ **न प्रतीतिरनुवर्तत इति** ॥ क्षणिकत्वा-
ामुत्तरवर्णोच्चारण काल एव पूर्वपूर्वप्रतीतेर्नष्टत्वादिति भावः । ननु प्रतीतिनाशेपि प्रतीतानां
क्तौ कथमति प्रसङ्ग इत्यत आह ॥ **नहीति** ॥ प्रतीत्येति ल्यबन्तम् । अप्रतीयमानानामिति
॥ **ज्ञानयौगपद्येति** ॥ ज्ञानानात्मविशेषगुणतया पूर्वपूर्वज्ञानानामुत्तरोत्तरात्मविशेषगुणनाश्यत्वेन
ावर्तकभावापन्नत्वेन क्षणिकत्वेन च यौगपद्यस्य प्रतिषिद्धत्वाच्चेत्यर्थः ॥ **अर्थभेदप्रत्ययो**
**देति** ॥ वर्णानामविशिष्टत्वे तद्भेदेनार्थभेदायोगादिति भावः । धर्मिधर्मयोरन्यतरकल्पनमपि
॥ **स चेति** ॥

**या०**— **पदवाक्यस्फोटयोरिति** ॥ अत्र पदस्फोटोपादानं प्रसङ्गात्तस्यापि निराकरणायेति
। नन्वप्रतीयमानानां ज्ञापकत्वेऽतिप्रसङ्गात्कादाचित्प्रतीतिरङ्गीकार्या । तेषां प्रतीत्यनुवृत्तिस्तु
धसमये कुत इत्यत आह ॥ **न हि प्रतीत्येति** ॥ पूर्वं प्रतीत्य पश्चादप्रतीयमानानामित्यर्थः ।
तिप्रसङ्गस्तदवस्थ एव स्यादिति भावः । एवं वाक्यमेव खल्वेवंविधं विना प्रमाणेन कल्पनीय-
ोषं परिहृत्येदानीं तस्य च वाक्यार्थप्रत्यायनशक्तिरपि कल्पनीयेत्युक्तदोषं परिहरति ॥ **स च**
**ाहकेणेति** ॥ ननु स्फोटस्यापि वर्णपदादिविभागोपेतत्वे उक्तदोषसाम्यमित्यत उक्तम् ॥ **अखण्ड**
। प्रत्यस्तमितवर्णपदविभाग एवेत्यर्थः । अतो नास्मन्मते उक्तदोष इति भावः ॥

**श्री०**— अनेकवर्णस्मृतीनां यौगपद्याङ्गीकारे त्वाह ॥ **ज्ञानेति** ॥ सजातीयात्मगुणानां
योगादिति भावः ॥ **तदेति** ॥ एकस्मृतिविषयत्व इत्यर्थः ॥ **नास्तीति** ॥ स्मृतिरूपाया
त्रेन तत्र क्रमाभावादिति भावः ॥ **प्रमाणेनेति** ॥ अर्थप्रत्यायकत्वान्यथाऽनुपपत्त्यैव स्फोटस्य
नत्वेन प्रतीतौ बहुमानाङ्गीकारादिति भावः ॥

सु०— तत्र ब्रूमः । किमयं स्फोटः स्वयं प्रतीतो वाक्यार्थपदार्थप्रत्याय स्वरूपेण । आद्ये किमनयाऽर्थापत्त्यैव तत्प्रतीतिरुत प्रमाणान्तरेण । नाद्यः । इ प्रसङ्गात् । प्रतीते हि स्फोटेऽर्थप्रतीतिस्तस्यां च सत्यां तदन्यथाऽनुपपत्त्या स्फोटप्रत न द्वितीयः तदभावात् ॥ नन्वेकं पदमेकं वाक्यं शब्दादर्थं प्रत्येमीत्येकार्थावलम्बिन प्रतीतिरस्तीति चेत् । इयमेव विचार्यताम् । किमेषा प्रत्यस्तमितवर्णपदविभागमेकं मवगाहते किंवा वर्णादिभेदमपि । आद्यस्तु प्रतीतौ बहुमानवता नाङ्गीकर्तुमुचितः । किं वर्णादयस्तस्यारम्भका उत व्यञ्जकाः । नाद्यः । नित्यत्वाभ्युपगमात् । द्वि प्रत्येकं तस्य व्यञ्जकाः किंवा समुदिता इति पूर्ववद्दोषाः । यस्त्वत्र प्रतीकारः सं कल्प्यतामिति पुनर्गौरवमेव । पूर्वपूर्ववर्णाभिव्यक्तं शब्दतत्त्वमुत्तरोत्तरैर्विशदं व्यज्यते कल्पना युक्तेति चेन्न । एकरसे वैशद्यावैशद्ययोरर्थगतयोरयोगात् । ज्ञानगतयोश्चान अथ वर्णादयस्तत्र कल्पिताः प्रतिभान्तीति मतम् ॥ तदिदमायातमप्रतीतं शशविष गवादिविषाणानि तु तत्र कल्पितानि प्रतिभान्तीति । ऐक्यप्रतीतिबलादित्थमास्थी चेन्न । भेदप्रत्ययबलाद्वनादिप्रत्ययवदैक्यप्रत्यय(स्यो)स्यैवौपाधिकत्वोपपत्तेः । उपा प्रत्यायकत्वम् । न चैकार्थप्रत्यायकत्वेनैकत्वप्रत्ययः । ततश्चैकार्थप्रत्यय इति परस्परा एकार्थप्रत्यायनस्य समयग्राहकप्रमाणादेव सिद्धत्वात् ।

वा०— पूर्ववदिति ॥ प्रत्येकपक्षे वर्णान्तरवैयर्थ्यं समुदायस्तु न संभवतीति दोष यथा रत्नपरीक्षकस्य पुनः पुना रत्नतत्त्वं वीक्षमाणस्य पञ्चषाणि रत्नदर्शनानि प्रत्येकं रत्नस्वरू मानान्यपि न सहसैव समानासमानजातीयव्यावृत्तरत्नतत्त्वमवभासयन्ति किन्तु पूर्वपूर्वदर्श भावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति रत्नतत्त्वं तथा व्यञ्जयन्तोऽपि प्रत्येकमि द्रागेव स्फुटतरं स्फोटमवभासयितुमीशतेऽपि त्वल्पं पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्त व्यक्तिक्रमेणान्योन्यो वर्णः स्फुटतरं स्फोटज्ञानमाधत्त इति न वैयर्थ्यं द्वितीयादीनाम् । नापि तदभावे तदभिव्यक्तिजनितसंस्काराभावेनान्त्यवर्णस्यासहायतया व्यक्तावाभासहेतुत्वासंभवात् । कल्पना स्फोट एव युक्ता नार्थे स्फोटस्य शब्दत्वेन श्रावणप्रत्यक्षतया प्रत्यक्षगोचरस्य व्यक्ति भावत्वेन दृष्टत्वात् । मानान्तरगम्यार्थस्य तु शब्दाद्व्यक्तमेव वा प्रतीतिरप्रतीतिरेव वेति न सा शङ्कते ॥ पूर्वपूर्वेति ॥ तन्मते ध्वनीनामेव स्फोटव्यञ्जकत्वेऽपि वर्णादयस्तस्यारम्भका व्यञ्ज विकल्पमुखेन प्रवृत्तेस्तदनुसारेण वर्णाभिव्यक्तमित्युक्तमिति द्रष्टव्यम् । सामान्यविशेषतत्त्वानां

मानता हि वैशद्यम् । सामान्यमात्रस्य किञ्चिदंशानां वाऽनुभवोऽवैशद्यम् । न च निखिल-
शेषविरहिणो निरंशस्य स्फोटस्य तादृशवैशद्यावैशद्ये संभवतः । नापि पूर्वपूर्ववर्णैरस्फुटमुत्तरोत्तरै-
ज्ञानं कस्याप्यनुभवसिद्धम् । अतो नेदं वैलक्षण्यं युक्तमित्याशयेनाह ॥ **एकरस इति** ॥
देविभागो न प्रतीयत इति नोच्यते येन प्रतीतिविरोधः स्यात् । नापि वर्णादीनां स्फोटोत्पादक-
येन तत्पक्षोक्तदोषः । अपि त्ववश्यं किलार्थप्रतिपत्त्यर्थं क्षणभङ्गुरवर्णव्यतिरिक्तस्फोटोऽभ्यु-
। स च केनचिदभिव्यङ्ग्यः । तत्राभिव्यञ्जकत्वं तावत् ध्वनिषूभयसम्प्रतिपन्नम्; तव तद्वर्णानां
ोटस्येत्येव विशेषः । न च ध्वनिभिरेव स्फोटाभिव्यक्तिसिद्धावतिरिक्तवर्णकल्पनया किञ्चिदस्ति
। प्रत्युत कल्पनागौरवमेवाधिकम् । ततो यथा नित्यनिरतिशयचिदानन्दैकरसे ब्रह्मण्यसदप्यना-
विद्यावशात्सदिवाभाति तथाऽनवयवे नित्ये स्फोटाख्ये शब्दब्रह्मण्यशेषमिदं जगदसदप्यनाद्यवि-
वर्णपदविभागः प्रतीयते । तदभिव्यक्तिः पुनर्वृत्त्या चैतन्याभिव्यक्तिरिव ध्वनिभिराश्रीयत
न्तरहस्यमिति नानुपपत्तिरित्याशङ्कते ॥ **अथेति** ॥ अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च मतद्वयम-
त्याशयेनार्थान्तरन्यासेनाभाससमानयोगक्षेमतामाह ॥ **तदिदमिति** ॥ एकं पदमेकं वाक्य-
प्रतीतेः स्फोटं विनाऽनुपपत्त्या स्फोटस्य प्रामाणिकत्वात्तद्बलायत्तकल्पनायां नाभाससाम्य-
। ॥ **ऐक्येति** ॥ सर्वत्रैक्यप्रत्ययस्यैवमन्यथासिद्ध्या तद्बलात्क्वाप्यैक्यं न सिध्येदिति शङ्का-
भेदप्रत्ययबलादित्युक्तम् ।

०— **एकार्थावलम्बिनीति** ॥ नैकेषु वर्णेष्वेकं पदमिति तथाऽनेकेषु पदेष्वेकं वाक्यमिति
तदतिरिक्तमेकमर्थमवगाहत इत्यर्थः । **आद्यस्तु प्रतीतौ बहुमानवता नाङ्गीकर्तुमुचित इति** ॥
मूहात्मकमिदमेकं वाक्यं एतावद्वर्णसमूहात्मकमिदमेकं पदमिति पदविभागस्य वर्णविभागस्य च
द्धत्वादिति भावः । ननु न वर्णादयस्तात्विकाः ये नारम्भका अभिव्यञ्जका वा इति
प्रसक्तिः । किन्त्वविद्यमानास्तत्रारोपिता एव प्रतिभान्तीत्याशयेन शङ्कते ॥ **अथ वर्णादयः**
**ऐक्यप्रतीतिबलादिति** ॥ एकं पदमित्याद्येक प्रतीतिबलादित्यर्थः ।

०— **प्रतीतौ बहुमानवतेति** ॥ एतावद्वर्णसमूहात्मकमिदमेकं पदं एतावत्पदकदम्बात्मकमेकं
वर्णपदादिविभागस्यानुभवसिद्धत्वादिति भावः ॥ **यस्त्वत्र प्रतीकार इति** ॥ पूर्वपूर्ववर्णा-
तसंस्कारसहकृतान्त्यवर्णेनानुभूयमानेन स्फोटोऽभिव्यज्यत इति त्वयोक्तदोषप्रतीकार इति
तादृशोन्त्यवर्ण एवार्थावबोधहेतुः कल्प्यतामित्यर्थः ॥ शब्दतत्वं स्फोटाख्यम् । तद्वैशद्यादिकं

स्फोटरूपार्थे कल्प्यते अथ तज्ज्ञानेन द्वयमपीति क्रमेण निराह ॥ **एकरस इत्या**
स्फोटाख्यशब्दे ॥ **ऐक्येति** ॥ एकं पदमेकं वाक्यमिति पदादावैक्यप्रतीतीत्यर्थः
वर्णानां पदे पदानां च वाक्येऽनेकत्वेनैक्यप्रत्ययस्याधिष्ठानगतैक्यारोपेण विना
**समयग्राहकप्रमाणादिति** ॥ पदपदार्थसङ्केतग्राहकवृद्धव्यवहारादिरूपप्रमाणादेवेत्य

या० — **एकार्थावलम्बिनीति** ॥ अनेकेषु वर्णेष्वेकं पदमिति तथाऽने
मिति प्रतीतवर्णातिरिक्तं पदातिरिक्तं वैकमर्थमवगाहत इत्यर्थः । ननु वर्णादयस्त
भिव्यञ्जका वेति विकल्पदोषप्रसक्तिः । किं त्वविद्यमानास्तत्रारोपिता एव प्रतिभा
**अथवर्णादयस्तत्रेति** ॥ **ऐक्यप्रतीतिबलादिति** ॥ एकं पदमेकं वाक्यमिति
**भेदप्रत्ययस्येति** ॥ वर्णानां बहुत्वेन भेदस्यानुभवसिद्धत्वादिति भावः ॥ ब
यथाऽनेकेषु तरुष्वेकं वनमिति प्रत्यय एकस्थानस्थितत्वरूपोपाधिनिमित्तकस्तद्वदित्यर्थ

श्री० — **नाङ्गीकर्तुमुचित इति** ॥ स्फोटत्वेन रूपेणाप्रतीयमानत्वादित्य
यथा प्रत्येकं समुदितविकल्पेन वर्णानां स्फोटव्यञ्जकत्वं न संभवतीति स्फोटेऽसदुक्त
क्रियते स प्रतीकारो 'वर्णा न प्रत्येकमर्थप्रतीतिमुपजनयन्ति, नापि समुदिता' इत्
क्रियतामित्यर्थः । स प्रतीकारोऽर्थे कल्पयितुं न शक्यत इत्याशङ्कते ॥ **पूर्वपूर्वेति**
अनेकेषु वर्णेष्वेकं पदमनेकेषु पदेष्वेकं वाक्यमिति प्रतीतिबलादेकस्मिन्स्फोटे
प्रतिभान्तीत्याश्रीयत इत्यर्थः ॥ **अप्रतीतमिति** ॥ स्फोटत्वेन रूपेणाप्रतीयमानस्य त
त्वादिति भावः ॥ **भेदप्रत्ययबलादिति** ॥ वर्णानां पदानां च बहुत्वस्यानुभवसिद्ध
**समयग्राहकप्रमाणादेवेति** ॥ पदपदार्थसङ्केतग्राहकवृद्धव्यवहाररूपप्रमाणादेवेत्यर्थः

च० — अनूदितं मतं प्रतिविधत्ते ॥ **अत्र ब्रूम इति** ॥ **एकरस इति** ॥

**सु० — एकार्थप्रत्यायनं च नानुपपन्नम् एकस्मृतिसमारूढानां तदुप**
**क्रमोपहितानामेव तेषां स्मृत्याऽवगाहनान्न क्रमव्युत्क्रमयोरविशेषापत्तिः । उ**
**परास्ता वेदितव्या । अन्यथोपपत्तेरुक्तत्वात् ।**

**अप्रतीतस्य तु प्रत्यायकत्वेऽतिप्रसङ्गः ॥ तस्मात्सुष्ठूक्तं गौरवं कल्प**

वा०— यद्यपि पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णविषयकश्रोत्रजन्यसद विषयकैकानुभव एवार्थप्रत्ययनाय पद्धत्युक्तरीत्या वक्तुं युक्तः । तथाऽपि मौनिश्लोकलिप्या स्थले समूहालम्बनस्मृतेरेव वक्तव्यतया सर्ववर्णविषयकैकानुभवस्थले च तस्य शक्तिस्मृतिव ऽर्थप्रत्यायनाव्यवहितसमूहालम्बनस्मृतेरेव वक्तव्यतया तदुपारूढताभ्युपगमेनैव परिहारमाह **स्मृतीति** ॥ वर्णानामेकबुद्ध्यारोहाङ्गीकारे क्रमस्यानङ्गत्वमुक्तं स्यात् । तथा च राजा जा भेदो न प्रतीयेतेत्युक्तदोष इत्यत आह ॥ **अनुभवेति** ॥ न चानुभवक्रमरूपोपाधेः पू स्मृतिविषयत्वमिति वाच्यम् । क्रमिकतत्तद्वर्णानुभवानन्तरं क्रमविशिष्टानुभवानामेव साक्षि पपत्तेः । केचित्तु स्मृतिरनेकवर्णमात्रविषयिणी वर्णेषु च न स्वतः क्रमः किन्तु क्रामिकानुभव क्रमः । तथा च वर्णस्मृतिवत्तेषु क्रामिकानुभवविषयत्वमपि स्वरूपेणार्थप्रत्यायने निमित्तम निमित्तकारणस्यापि ज्ञानं कारणमिति न तदनुभवापेक्षा । वस्तुतः क्रामिकानुभवविषयवर्णान प्रत्यायनाङ्गत्वाभ्युपगमात् । न च क्रमव्युत्क्रमयोरविशेषोऽपीत्याहुः । ननूक्तरीत्या वर्णानां क्रामिकानुभवविषयत्वस्यापि साक्ष्यनुभूतस्य स्मृतिविषयत्वोपपत्तेः । स्वरूपेण स्फोटोऽर्थप्र द्वितीयं निराकरोति ॥ **अप्रतीतस्येति** ॥

स०— तदा क्रमो न स्यादित्युक्तं दोषं परिहरति ॥ **अनुभवक्रमोपहितानामेवे** भवक्रमोपहितक्रमानामेवेत्यर्थः । अनुभवक्रमजन्यो वर्णक्रमः प्रतिभासत इति भावः । तेना कथं वर्णधर्मत्वेन भानमिति शङ्काऽनवकाशः । ननु क्रमः पूर्वमननुभूतः कथं स्मृत्या विषयी चेत् । क्रमोत्पन्नानुभवाहितक्रमिकसंस्कारबलादननुभूतवर्णक्रमस्यापि प्रतिभासाङ्गीकारात् । एव स्मर्यत इति नियमस्तथा सत्यतीतत्वस्यापि स्मृतावप्रतिभासप्रसङ्गादिति ॥ **अर्थापत्ति** अर्थप्रत्ययान्यथानुपपत्तिरित्यर्थः ॥ **अन्यथोपपत्तेरिति** ॥ एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽ पत्तेरुक्तत्वादित्यर्थः ॥ **किं वा स्वरूपेणेति** ॥ प्राग्विकल्पितं द्वितीयपक्षमनूद्य दूषयति ॥ **त्विति** ॥ अतिप्रसङ्गो बधिरस्यापि शाब्दबोधलक्षणः ।

प०— प्रागुक्तदोषान्निराह ॥ **एकार्थेत्यादिना** ॥ **अर्थापत्तिरपीति** ॥ ऐक्यप्र नुपपत्तिरूपार्थापत्तिरपि । अत एवेत्युक्तं व्यनक्ति ॥ **अन्यथेति** ॥ ऐक्यप्रत्ययस्यौपाधिकत्वोप त्वादित्यर्थः । यद्वा पदार्थवाक्यार्थप्रतीत्यन्यथानुपपत्तिरूपार्थापत्तेरपि । शक्तिश्चैवान्विते त्रिपाद्यामन्विताभिधानकथनेनान्यथोपपत्तेरुक्तत्वादित्यर्थः । किं वा स्वरूपेणेति प्राग्विकल्पि दोषमाह ॥ **अप्रतीतस्येति** ॥ स्फोटस्येति योज्यम् । सर्वदार्थप्रतीतिरूपातिप्रसङ्ग इत्यर्थः ॥

**या०**—तदा क्रमो न स्यादित्युक्तदोषं परिहरति ॥ **अनुभवक्रमेति** ॥ अनुभवक्रमोप णामेवेत्यर्थः । अनुभवानां क्रमिकत्वात्तदुपाधिकः क्रमो वर्णेषु प्रतिभासत इति भावः । तेनानु कथं वर्णधर्मत्वेन भानमिति शङ्काऽनवकाशः । न च क्रमः पूर्वमननुभूतः कथं स्मृतिवि वाच्यम् । क्रमोत्पन्नानुभवाहितक्रमिकसंस्कारबलादननुभूतस्यापि वर्णक्रमस्य प्रतिभासाङ्गीकार ह्यनुभूतमेव स्मर्यत इति नियमः । तथा सत्यतीतत्वस्यापि स्मृतावप्रतिभासप्रसङ्गात् । यद्यपि दैशिकः कालिको वा क्रमः संभवति । व्याप्तत्वान्नित्यत्वाच्च । नापि वस्तुनिबन्धनः । जारा राजेति प्रयोगे जकारस्य पौर्वापर्यायोगात् । नापि बुद्ध्यादिगत एव क्रमो वर्णेष्ववभा युक्तम् । वर्णपदादिगतस्य क्रमस्य श्रावणत्वानुभवाद्बुद्धिक्रमस्य चातथात्वात् । न चारोपित क्रम इति युक्तम् । पदवाक्यादेरत्यन्तासत्त्वापत्तेः तथाऽपि बुद्धिक्रमजन्यो वर्णेष्वौपाधिक क्रमोऽस्त्येव । क्रमस्तु वर्णधर्म इति स्पष्टं पूर्वोक्तत्वात् । न च स कीदृश इति वाच्यम् कालनिबन्धनक्रमापेक्षया देशनिबन्धनस्तत्तद्वस्तुगतः क्रमो विलक्षणोऽनुभूयमानो विशिष्य वक्तुं कैश्चिदङ्गीक्रियते तथा बुद्धिक्रमनिबन्धनो वर्णपदादिगतानुपूर्वीरूपः श्रोत्रेणानुभूयमानो वक्तुंशक्य कार्थः । न हि सर्वत्र क्रमशब्द एकार्थक इति प्रतिभाति । अन्येतु तत्तद्वर्णादिविषयकबुद्धि वर्णपदादिक्रमो नातिरिक्तः । न चैवं क्रमस्य श्रावणत्वासंभवः । साक्ष्युपनीतस्यैव तस्य तत्र कारादित्याहुः ॥ **अर्थापत्तिरपीति** ॥ अर्थप्रत्ययान्यथाऽनुपपत्तिरित्यर्थः ॥ **अन्यथोपपत्ते** अनुभवक्रमोपहितक्रमवद्भ्य एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽर्थप्रत्ययोपपत्तेरुक्तत्वादित्यर्थः स्वरूपेणेति प्राग्विकल्पितं द्वितीयपक्षमनूद्य दूषयति ॥ **अप्रतीतस्य त्विति** ॥ अतिप्रसङ्गो शाब्दबोधप्रसङ्गलक्षणः ।

**श्री०**— ननु शब्दादर्थं प्रत्येमीत्येकार्थप्रत्यायकत्वान्यथाऽनुपपत्त्या स्फोटः सिद्धः । एकार्थप्रत्यायनस्यैवानुपपत्तेरित्यत आह ॥ **एकार्थप्रत्यायनं चेति** ॥ येन तदन्यथाऽनुपपत्त्या कल्प्येतेत्याशयः । तथाच स्फोटाभावेऽप्यस्मन्मते नानुपपन्नं किं तूपपन्नमेवेत्यर्थः । त ॥ **एकस्मृतीति** ॥ समारूढानाम् । तदुपपत्तेरेकार्थप्रत्यायकत्वोपपत्तेः । नन्वेकस्मृतिविषयत्वे स्मृतिरूपायां बुद्धौ क्रमाभावेन वनं नवमित्यादौ वर्णानां क्रमव्युत्क्रमयोरर्थविशेषबोधायोगेनाऽ र्थबोध एव स्यादित्यत आह ॥ **अनुभवक्रमोपहितानामिति** ॥ तदुपहितक्रमवतामित्यर्थः । **व्युत्क्रमयोरिति** ॥ स्मृतौ क्रमाभावेऽपि तज्जनकपूर्वानुभवे वर्णेषु क्रमस्योत्पन्नत्वादिति भाव

पु०— अन्ये त्वाहुः स्मर्यमाणा वर्णमालैव वाक्यार्थबोधजननीति । तदप्यसत् । व्युत्पत्तिसहाया वा तथा स्यादन्यथा वा । अन्यथा चेदतिप्रसङ्गः । आद्ये पदतदर्थाव- श्रितत्वात्किं तयेति गौरवमेव । किञ्च क्रमोपेतानां द्वित्राणां पञ्चषाणां वा वर्णानां पद्यते । महावाक्यस्थानां शतसहस्रसङ्ख्यानां तु स्मरणं दुःश(शं)कमेव । किमभ्यासस्य ति चेन्न । गत्यन्तराभावे त्वेवमेतत् । सति तु सुखोपाये न प्रयासगौरवकल्पना एतदप्युक्तं गौरवं कल्पनेऽन्यथेति ॥

ा०— एवं वैयाकरणाभिमतं पक्षं निराकृत्य मीमांसकैकदेशिमतं निराकर्तुमनुवदति ॥ अन्ये अन्यथा चेदिति ॥ व्युत्पत्त्यनपेक्षायां पदतदर्थानुसन्धानाभावेन संबन्धिरूपदार्थज्ञाना- त्तत्संसर्गरूपवाक्यार्थज्ञानाभ्युपगमेऽतिप्रसङ्ग इत्यर्थः । यद्वा व्युत्पन्नवदव्युत्पन्नस्यापि वर्णमाला- ोषाद्वाक्यार्थबोधप्रसङ्ग इत्यर्थः ॥ आद्य इति ॥ तत्तत्पुरुषप्रयुक्ततत्तदभिप्रायानुसारिवाक्याना- ाक्यार्थस्यापूर्वत्वाच्च तत्तद्वाक्यस्थवर्णमालाया वाक्यार्थेषु व्युत्पत्तेरसंभवेन व्युत्पत्त्यपेक्षां वदता गीततत्तद्वर्णेषु पदत्वानुसन्धानस्य ततस्तत्तत्पदार्थानुसन्धानस्यावश्याश्रयणीयतया तत एव धोपपत्तौ वर्णमालायास्तद्बोधकत्वकल्पने गौरवमित्याशयः । वाक्यस्थवर्णमालास्मरणमभ्युपेत्य ( । वस्तुतस्तु तदेवाशक्यमित्याह ॥ किञ्चेति ॥

०— अन्यथा चेदतिप्रसङ्ग इति ॥ अव्युत्पन्नस्याप्यर्थबोधप्रसङ्ग इत्यर्थः ॥ सति तु इति ॥ अन्विते शक्त्युपेतपदरूपोपाये सतीत्यर्थः ॥

ा०— मीमांसकैकदेशिनां मतमनूद्य दूषयति ॥ अन्ये त्वाहुरित्यादिना ॥ पदतदर्थाव- ॥ अन्यथा व्युत्पत्तिरेव न संभवतीति भावः ।

ो०— सा वर्णमाला । तथा वाक्यार्थबोधजननी ॥ पदतदर्थावबोधस्येति ॥ पदानां तद- नवगमे वर्णमालासहायभूताया वाच्यवाचकभावसंबन्धरूपाया व्युत्पत्तेरेवायोगेन केवलायाः ोमालाया वाक्यार्थबोधजकत्वायोगात्तदर्थं व्युत्पत्तिरूपसहायाङ्गीकारे पदतदर्थावबोधस्याश्रितत्वा- पदार्थत्वेन वाक्यार्थावबोधस्यावबुद्धत्वात्किं तया स्मर्यमाणवर्णमालयेत्यर्थः । लघूपाये पदेनैवा- ो उपाये ॥

०— मीमांसकैकदेशिमतं प्रत्याचिख्यासुरनुवदति ॥ अन्ये त्विति ॥

सु०— अपरे तु वाक्यान्त्यवर्णं वाक्यार्थस्य प्रतिपादकमाचक्षते ॥ तदप्ययु हि केवलो वा तथा स्यात् । पूर्ववर्णसंबन्धस्मरणेनानुगृहीतो वा । आद्ये पूर्ववर्णोच्चार अतिप्रसङ्गश्च । द्वितीयेऽनुभूयमानः स्मर्यमाणो वा । नाद्यः । सबन्धस्मृतिव्यवहित तदाऽनवस्थानात् । द्वितीये तु किमनेन प्रयत्नगौरवेण ॥ स्मृतिस्था वर्णाः पदत्वेन वाक्यार्थमवगमयन्तीत्येव वक्तव्यम् ॥ तदिदमुक्तम् गौरवं कल्पनेऽन्यथेति । पूर्व एवोपयोगी न स्मृतिरिति चेन्न । तथा सति पदानुसन्धानासंभवेन संबन्धस्य स प्रसङ्गादिति ॥

वा०—जरन्नैयायिकमतं निराकर्तुमनुवदयति ॥ अपरे त्विति ॥ अनुगृहीत इति इत्यर्थः ॥ अतिप्रसङ्गश्चेति ॥ अन्त्यवर्णश्रवणमात्रेण वाक्यार्थबोधप्रसङ्ग इत्यर्थः । तदा बोधसमये । तत्तद्वर्णानुभवजनितसंस्कारैस्तत्स्मरणं ततः पदानुसन्धानं ततः पूर्ववर्णसंबन पूर्वपूर्वपदानुभवजनितसंस्कारैस्तत्पदस्मरणं ततः पूर्वपदसंबन्धस्मरणं ततःपदार्थस्मृतिरित्याद्यनेव एकस्मृत्युपारूढानां सर्ववर्णानां पदत्वेनानुसंहितानां वाक्यार्थबोधकत्वकल्पनापेक्षाऽतिगुर ॥ किमनेनेति ॥ ननु पूर्ववर्णसंस्कारोऽन्त्यवर्णमात्रस्मरणं वाक्यार्थबोधोपयोगितयाऽभ्युपगम्य गौरवमिति शङ्कते ॥ पूर्ववर्णेति ॥ सर्ववर्णाविषयैकस्मृत्यनभ्युगपमे संस्कारस्य स्मृतिमात्र पूर्ववर्णसंस्कारमात्रेण तेषु पदत्वानुसन्धानासंभवेन पूर्ववर्णसंबन्धस्मरणरूपस्य त्वदुक्तस्यान्त्यवर्णस ऽप्यभावप्रसङ्ग इत्याह ॥ तथा सतीति ॥ उपलक्षणं चैतत् । उक्तरीत्या पूर्ववर्णसंस्कारस्य तदर्थस्य पूर्ववर्णोच्चारणस्य वैयर्थ्यमित्यपि द्रष्टव्यम् ॥

या०— जरन्नैयायिकमतमनूद्य निराकरोति ॥ अपरे त्वित्यादिना ॥ पूर्वव सम्बन्धेनेति ॥ पदत्वानुसन्धानेनेत्यर्थः ॥ पूर्ववर्णसंस्कार एवेति ॥ तथा च स्मृति इत्येतन्न युक्तमिति भावः । सम्बन्धस्मरणस्येति ॥ शक्तिस्मरणस्येत्यर्थः ।

श्री०— पूर्ववर्णसंबन्धस्मरणेनेति ॥ पूर्ववर्णानां पदत्वानुसंधानानन्तरं तच्छक्तिस्मर ॥ अतिप्रसङ्ग इति ॥ अन्त्यवर्णश्रोतॄणां सर्वेषामपिवाक्यार्थबोधः स्यादित्यर्थः ॥ अनुभूयमान इ वाक्यांत्यवर्णः स्वयमनुभूयमानः पूर्ववर्ण संबन्धस्मरणेनानु गृहीतः सन्वाक्यार्थप्रतिपादक इत्यर्थः न्धस्मृतीति ॥ शक्तिस्मरणेत्यर्थः ॥ अनवस्थानादिति ॥ अन्त्यवर्णानुभवानन्तरं पूर्वानुभूतव

। तेन तेषु पदत्वानुसंधानेन तस्य पदस्य शक्तिस्मरणेन भवितव्यम् । तथाच वर्णस्मरणपदत्वानु-
च्छक्तिस्मरणैरन्त्यवर्णानुभावस्य नष्टत्वेन वाक्यार्थबोधसमयेऽन्त्यवर्णानुभवानवस्थानान्नानुभूयमानोऽ-
वाक्यार्थप्रतिपादक इत्यर्थः ॥ **प्रयत्नगौरवेणेति** ॥ पूर्ववर्णसंबन्धस्मरणानुगृहीतान्त्यवर्णस्मरण-
पार्थबोधकत्वाङ्गीकारे गौरवमित्यर्थः । तर्हि लाघवं कथमित्यत आह ॥ **स्मृतिस्था इति** ॥ अनु-
गहितक्रमवन्त इति शेषः ॥ **संस्कार एवेति** ॥ तथा च स्मृतिस्था वर्णा इत्युक्तमसदिति भावः ।
ते ॥ पदत्वेत्यर्थः । संबन्धः शक्तिः ॥

च० — प्राचीननैयायिकमतमपाचिकीर्षुरनुवदति ॥ **अपरे त्विति** ॥

**सु० — केचिदाहुः । यो यानि पदानि प्रयुङ्क्ते स तत्पदार्थसंसर्गप्रतिपादनाभिप्रा-**
**ते सामान्येन स्वात्मनि नियमे प्रतीते पश्चात्पदसमूहप्रयोगाद्वक्तुस्तत्पदार्थसंसर्गप्रतिपादना-**
**वगतिद्वारेण पदेभ्यो वाक्यार्थानुमानमिति ॥ इदमप्यनुपपन्नम् ॥ तथा हि । पद-**
**मात्रप्रयोगाद्वा संसर्गज्ञानानुमानमुताङ्गादिमत्त्वे सति । नाद्यः व्यभिचारात् ।**
**तु तथाविधपदैरेव वाक्यार्थावगतेर्वक्तृज्ञानानुमाने बकबन्धरीतिप्रयास एवेति ॥ तदिद-**
**गौरवं कल्पनेऽन्यथेति ॥**

वा० — वैशेषिकपक्षं निराकर्तुमनुवदति ॥ **केचिदिति** ॥ **द्वितीये त्विति** ॥ एवेत्यस्य
त्यर्थः ॥ **बकबन्धरीतिप्रयास इति** ॥ बकबन्धसमानन्यायमित्यर्थः । बकग्रहणे क उपाय
नचित्पृष्टे खरतरदिनकरसंपर्कद्रुततन्मस्तकनिहितनवनीतबिन्दुभिर्नयनयोः पूर्णतायां तद्ग्रहणं
ते कश्चित्प्रवदति । न च तदुपपद्यते । बकग्रहणमन्तरेण तन्मस्तके नवनीतप्रक्षेपानुपपत्तेस्त-
गृहीते च तत्प्रक्षेपोऽपि मुधैवेति न्यायाभिप्रायः । बकबन्धरीतिव्युत्पादनाय बक्तृज्ञानानु-
युक्तम् ॥

स० — **पदेभ्यो वाक्यार्थानुमानमिति** ॥ संसर्गाभिप्रायकपदेभ्य इत्यर्थः । तथा चैतानि
वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । तदभिप्रायकपदकदम्बकत्वादित्यनुमाने वक्तृज्ञानावच्छेदकतया
सिद्धिरिति भावः । एतदनुमानेऽसिद्धिवारणाय पूर्वानुमानमत एवाभिप्रायगतिद्वारेणेत्युक्तमिति
॥ **बकबन्धरीतिप्रयास इति** ॥ बकबन्धरीतिमेवमाहुः । बको धार्य इति पृष्टः कश्चिदाह ॥

बकशिरसि नवनीतं स्थापनीयं तस्य च तपनकिरणतप्तस्य बकचक्षुःप्रवेशेन तदनन्तरं बको
अत्र यथा नवनीतस्थापनार्थं गतेनैव बकस्य धर्तुं शक्यत्वान्नवनीतस्थापनानन्तरं बकधारणे
तथा प्रकृतेऽपीत्यर्थः ।

प० — **नाद्यः व्यभिचारादिति** ॥ गौरश्वःपुरुषो हस्तीत्यादिवाक्ये ॥ **बकबन्**
बको नाम पक्षी मया कथं ग्राह्य इति केनचित्पृष्टे अन्यो वदति क्वचिदुपविष्टस्य बकस्य शिर
स्थापिते सति आतपेन द्रवीभूतेन चक्षुरन्तःप्रविष्टेन तेन चक्षुषो निमीलने सति बको बन्धनीय
बकबन्धनरीतिः । नवनीतस्थापनकाल एव बकबन्धनसंभवे तदुक्तरीतिर्यथा प्रयासस्तथाऽयमर्प

या० — वैशेषिकादिमतं निराकर्तुमनुवदति ॥ **केचिदाहुरिति** ॥ **अभिप्राया**
**णेति** ॥ अभिप्रायानुमितौ वाक्यार्थस्तदवच्छेदकतयैवावभासते न साक्षादित्यर्थः ॥ **पदे**
तत्प्रयोगादित्यर्थः । तथा च विमतो वक्ता एतत्पदार्थसंसर्गप्रतिपादनाभिप्रायवान् एतत्समुदाय
दित्यनुमानमत्र विवक्षितमित्यवधेयम् । इदमुपलक्षणम् । एतत्पदार्थसंसर्गज्ञानवानित्यपि
विवक्षितम् । अत एव संसर्गज्ञानानुमानमित्यग्रे व्यवहारः । तत्र चाभिप्रायानुमानमित्यस्याप्यु
न विरोध इत्यवधेयम् ॥ **उक्ताकाङ्क्षादिमत्त्व इति** ॥ आकाङ्क्षादिमत्त्वविशिष्टपदसमुदा
इत्यर्थः ॥ **व्यभिचारादिति** ॥ आकाङ्क्षादिशून्यपदसमुदायप्रयोक्तरीति शेषः । तथा च
पदानि प्रयुङ्क्त इत्युक्तसामान्यनियमो व्यभिचारेण दुष्ट इति भावः ॥ **बकबन्धरीतीति** ॥
रीतिमेवमाहुः । कथं बको धार्य इति पृष्टः कश्चिदाह । बकशिरसि नवनीतं स्थापनीयं,
तपनकिरणसन्तप्तस्य बकचक्षुःप्रवेशेऽनन्तरं बको धार्य इति । अत्र यथा नवनीतस्थापनार्थं गतेनै
धर्तुं शक्यत्वान्नवनीतस्थापनानान्तरं बकधारणे प्रयासगौरवं तथा प्रकृतेऽपीत्यर्थः ।

श्री० — **वाक्यार्थानुमानमिति** ॥ एतानि वैदिकानि पदानि स्वस्मारितार्थसंसर्गज्ञानपू
आकाङ्क्षादिमत्पदकदम्बकत्वाद्गामानय शुक्लां दण्डेनेत्यादिपदवदित्यनुमानेन वक्तृज्ञानावच्छे
संसर्गसिद्धेः । पदानामनुमानविधयैव संसर्गबोधकत्वं न तु शब्दत्वेनेत्यर्थः । तथा च वाक
शाब्द इत्याशयः ॥ **प्रयास एवेति** ॥ तथा च हेतुज्ञानसमय एव वाक्यर्थस्यावबुद्धत्वात्तेनाभिप्राय
तदवच्छेदकत्वेन पुनरनुमानेन संसर्गबोधाङ्गीकारे बकबन्धरीतिप्रयासतुल्यः प्रयासः प्राप्त इत्यर्थः

च० — वैशेषिकमतं प्रतिविधित्समानोऽनुवदति ॥ **केचिदाहुरिति** ॥

मु०— अभिहितान्वयवादिनो वदन्ति । पदाभिहिताः पदार्था एवाकाङ्क्षादिवशादन्यो-
बोधयन्तीति ॥ तैरपि हि पदार्थानामन्वयबोधकत्वं क्वाप्यनुपलब्धं तावत्कल्पनीयम् ।
यतः श्वेतमारूपं हे(ह्रे)षाशब्दं च शृण्वतः । खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति
इत्युक्तन्यायेनास्त्येव पदार्थानामन्वयबोधकत्वमिति चेन्न अनुमानादर्थापत्तेर्वा तत्रान्वय-
। तथा हि । एतेषां पदार्थानामेकाधिकरणतयाऽवगतानां वा प्रत्यायकत्वं विशकलित-
। आद्येऽनुमानत्वम् । द्वितीये तत्रार्थान्तराभावो निश्चितो न वा। आद्येऽर्थापत्तिर्भवताम्
नुमानमेव । द्वितीये त्वनध्यवसाय एव । प्रमाणान्तरावगतानां पदार्थानामन्वयबोधक-
ऽपि पदैरभिहितानां तत्किं न स्यादिति चेत् । तर्हि न केवलं पदार्थानामन्वयबोधक-
ल्पनम् किन्तु पदानां पदार्थाभिधानशक्तिस्तेष्वन्वयबोधकत्वाधानशक्तिश्च कल्प-
पदानां पदार्थेषु साहचर्यमात्रेण स्मारकत्वाङ्गीकारेऽपि शक्तिद्वयं कल्पनीयमेव ॥
म् । गौरवं कल्पनेऽन्यथेति ॥

।०—प्रमाणान्तरावगतेषु पदार्थेषु क्लृप्तमन्वयबोधकत्वं पदाभिहितेष्वप्यास्थीयते वा पदाभि-
ना तत्कल्प्यते । नाद्यः इत्याह ॥ तैरपीति ॥ ननु मानान्तरावसेयानां पदार्थानामन्वयबोधकत्वं
। अनवधारिताश्रयविशेषस्य प्रत्यक्षदृष्टश्वैत्यस्याप्रतिपन्नगुणविशेषस्य ह्रेषाशब्दानुमितस्याश्वत्वस्य
शब्दानुमितधावनस्येत्येतेषां प्रत्यक्षानुमानरूपप्रमाणान्तरसिद्धानां गुणक्रियाजातिरूपाणामर्थान्तर-
योग्यानां पदार्थानामन्वयबोधकत्वदर्शनादिति शङ्कते ॥ नन्विति ॥ आरूपं श्वेतं कञ्चि-
क्तमगवाश्वादिरूपम् । पदार्थानामित्यतःपूर्वं दर्शनसिद्धरूपस्य श्रवणश्रुतह्रेषाखुरनिष्पेषशब्दानुमि-
तेगतिरूपक्रिययोश्चेति शेषः । किं येनैव पुरुषेण श्वैत्यसमानाश्रयौ ह्रेषाध्वनिखुरनिष्पेषशब्दा-
स्यैवेयं श्वेतो धावतीति संसर्गधीरुत यस्य तथाऽनध्यवसायस्तस्यापीति । यदि तावदप्रत्ययाकलित-
ादविहारनिर्घोषापादानस्यैतदुच्यते । तदपि तस्यार्थान्तराभावस्यानिश्चयो यदि तदा विशिष्ट-
भ्युपगमे प्रतितीविरोधः । स ह्येवं प्रतिपद्यते । भवितव्यमस्मिन्देशे नूनमश्वेन भाव्यं च
तेति । न पुनः श्वेतोऽश्वो धावतीति । अथाश्वसंबन्धिनमेव खुरपुटटङ्कारवमभ्यासपाटववशा-
तदाऽसावश्वसंबन्धिनीमेव वेगवतीं गतिमनुमिनोति न पुनः केवलामेवावगम्यान्वयं पदार्थ-
बुध्यते । योऽप्यस्मिन्देशेऽश्वादन्यो नास्तीति निश्चित्य पारिशेष्याच्छाब्दापादानानध्यवसायेऽपि
: श्वैत्यसामानाधिकरण्यमध्यवस्यति । तस्यापि गृहादर्शन इव बहिर्भावावगतौ प्रमाणद्वय-
र्थापत्तिरेव । योऽयं श्वेतः स एवाश्व इत्यत्र तव मानम् । मम तु विशिष्टहेतुरूपमनुमानमेव

तत्र मानम् । यस्तु श्वैत्यसमानाधिकरणौ हेषाध्वनिखुरपुटटङ्कारवावध्यवस्यति तस्य श्वेतद्रव्यवर्ति
वद्गमनसमानाधिकरणाश्वत्वे श्वेतोऽयं धावदश्वो भवितुमर्हति हेषाध्वनिखुरनिष्पेषशब्दवत्त्वादित्य
मेवावयोरिति प्रमाणान्तरासंबद्धावगतपदार्थानां न कदाचिदन्योन्यसंबन्धबोधकत्वमनुमानार्थापत्तिव्या
प्रतीतमित्याशयेनाह ॥ **तथा इति** ॥ **एतेषामिति** ॥ प्रत्यक्षज्ञाप्याव्यक्तश्वेतरूपजातिक्रियाज्ञाप
खुरनिष्पेषशब्दलक्षणानामित्यर्थः ॥ **विशकलिततयेति** ॥ स्वरूपमात्रेणावसितानामित्यर्थः ॥ **आद्य**
यत्र तत्त्रितयं तत्राश्वत्वमिति व्याप्तिमपेक्ष्य गमकत्वादित्यर्थः ॥ **आद्य इति** ॥ अर्थान्तराभावैतत
ग्राहकप्रमाणद्वयविरोधेन तवार्थापत्तिः । अर्थान्तराभावविशिष्टैतदन्यतरस्याश्वत्वाविनाभावेन मम
मित्यर्थः ॥ **अनध्यवसाय एवेति** ॥ विशिष्टपदार्थान्वयबोध एवेत्यर्थः । द्वितीयं शङ्कते ॥ **प्रम
रेति** ॥

स०—यद्यप्यन्योन्याश्रयादिदोषो नास्ति तथापि अभिहितपदार्थेभ्य एव संसर्गसिद्धौ पद
सामर्थ्यकल्पनाया गौरवदूषणमित्यभिहितान्वयवादी शङ्कत इत्याह ॥ **अभिहितान्वयवादिन**
यदि हि पदार्थानां संसर्गबोधकत्वं स्यात् तर्हि तदपहाय पदानामपि सामर्थ्यकल्पनायां गौरवं स्य
न तु तदस्ति प्रमाणान्तरगृहीतपदार्थेष्वदर्शनादित्याह ॥ **तैरपीति** ॥ उक्तं च नाथेन । किन्तु
न दृष्टैषा शक्तिः मानान्तरागतौ । कल्प्याविशिष्टार्थपरपदसंस्पर्शभावितेति । प्रमाणान्तरगृह
मप्यस्त्येव संसर्गबोधकत्वमिति शङ्कते ॥ **ननु पश्यतः श्वेतमारूपमिति** ॥ अत्र हि दृश्यमानं
श्रूयमाणौ हेषाखुरनिष्पेषशब्दौ । वाक्याभावेऽपि श्वेतोऽश्वो धावतीति संसर्गबुद्धिं जनयन्ति । तेन
प्रतीतानामर्थानामेवान्वयबोधकत्वं न पदार्थानामिति । अत एव क्वाप्यनुपलब्धमित्यसदिति भ
**आद्येऽनुमानत्वमिति** ॥ अयं श्वेतः धावदश्वः हेषाखुरनिष्पेषवत्त्वादित्यनुमानत्वमित्यर्थः । एवमग्रे
**द्वितीये त्वनध्यवसाय एवेति** ॥ श्वेतोऽश्वो धावतीत्यध्यवसायो न भवत्येवेत्यर्थः । यत्र तत्र यं
बगतं तत्राश्वत्वं दृष्टमिति व्याप्त्या बोधकत्वादनुमानत्वमित्यर्थ इत्यप्याहुः ॥ **शक्तिद्वयं कल्पनीयमे**
पदार्थानामन्वयबोधकत्वशक्तिः । तेषामन्वयबोधकत्वाधानशक्तिश्चेति शक्तिद्वयं कल्पनीयमित्य

प०— भट्टमतमनूद्य निराह ॥ **अभिहितेति** ॥ पदार्थानामभावेऽपि पदार्थानामेव ज्ञा
मन्वयबोधकत्वमुपलब्धमिति नानुपलब्धकल्पना दोष इति शङ्कते ॥ **नन्विति** ॥ श्वेतं आरू
विभागः । किञ्चिच्छ्वेतं रूपं पश्यत इत्यर्थः । अन्धकारावृतप्रदेश इति ध्येयम् ॥ **हेषेति** ॥
ध्वनेर्हेषेति नाम । हेषाख्यशब्दमित्यर्थः ॥ **खुरनिष्पेषशब्दं चेति** ॥ शृण्वत इत्यन्वयः खुरनि
शब्दरूपोऽर्थो धावनान्वयस्य हेषाशब्दरूपोर्थोऽश्वान्वयस्य श्वेतरूपपदार्थो रूपान्वयस्य बोधक

श्वेतोऽश्वो धावतीति धीर्जायत इति पदार्थानामेव स्वज्ञानरूपव्यापारद्वाराऽन्वयबोधकत्व स्वमतेनाह ॥ **अनुमानादिति** ॥ परमतेनाह ॥ **अर्थापत्तेर्वेति** ॥ **आद्ये अनुमानत्वमिति** श्वेतः धावदश्वः हेषाखुरनिष्पेषशब्दवत्त्वात् । संमतवदितिप्रयोगप्रसङ्गादिति भावः ॥ **अर्था मिति** ॥ अर्थान्तराभावे सति श्रूयमाणहेषाखुरनिष्पेषशब्दान्यथानुपपत्तिरूपार्थापत्त्या धावदश्वत्वप्रतीतिर्भाट्टानामित्यर्थः ॥ **तदिदमुक्तमिति** ॥ अन्यथाकल्पने पदाभिहितपदार्थाः बोधकत्वकल्पने शक्तिद्वयाङ्गीकारगौरवमिति मूलार्थ इति भावः । विवृतमेतदभिहितान्वयभङ्गे त

या० — भाट्टमतं दूषयितुमनुवदति ॥ **अभिहितान्वयवादिन इति** ॥ पदार्थान कत्वं क्वाप्यनुपलब्धं कल्पनीयमित्येतदसहमानः शङ्कते ॥ **ननु पश्यत इति** ॥ श्वेतरूपं अ इत्यर्थः । श्वेतरूपमेव पश्यति न व्यक्तिविशेषसंसृष्टतयेति दर्शयितुमिदमिति ज्ञातव्यम् । मुपस्थितानां प्रतीयमानान्वयप्रतियोगिनामेव पदार्थानामन्वयबोधकत्वमत्र प्रदर्शनीयम् । न श्चित् । अतिप्रसङ्गात् । हेषाखुरनिष्पेषशब्दौ च न श्वेतोऽश्वो धावतीति प्रकृतान्वयप्र तथाऽपि पदार्थानामन्वयबोधकत्वे प्रतीयमानान्वयप्रतियोगित्ववत्तादृशान्वयप्रतियोगितावच्छेदक करणत्वमपि तन्त्रतो नातिप्रसङ्ग इत्यभिप्रेत्याश्वत्वसमानाधिकरणस्य हेषाशब्दस्य धावनकर्तृत्वस करणस्य खुरनिष्पेषशब्दस्य चान्वयबोधकत्वमात्रं प्रदर्शितमित्यवधेयम् ॥ **उक्तन्यायेनेति** निदर्शनेनेत्यर्थः । तथा च यथा वाक्याभावेऽपि प्रमाणान्तरोपस्थितानां श्वेतादिपदार्थाः कारणत्वमुपलब्धं तथा पदोपस्थापितानामपि पदार्थानामन्वयबोधकारणत्वमस्तु न पदार्थानामि **अनुमानादिति** ॥ तथा च तत्रार्थानामन्वयबोधकारणत्वमनुमानादितयैव न पदार्थतयाऽ च्छेदप्रसङ्गात्ततश्च पदार्थानामन्वयबोधकरणत्वेनेदं निदर्शनमिति भावः ॥ **एष मिति** ॥ शब्दखुरनिष्पेषशब्दरूपार्थानामित्यर्थः । विशकलिततयेत्यत्र समानाधिकरणतयाऽनवगमम न तु व्यधिकरणतयाऽवगमोऽपि । तथा सति वक्ष्यमाणार्थापत्तेरनुमितेर्वाऽसंभवादित्यवधेयम् **ऽनुमात्वमिति** ॥ उभयमतेऽपीति शेषः । सामानाधिकरण्यावगमेन हेतूकर्तुं शक्यत्वादि अत एव सामानाधिकरण्यावगमाभावेऽर्थापत्तिर्भवतामिति वक्ष्यति । अनुमानं चेत्थम् । धावदश्वो भवितुमर्हति । हेषाखुरनिष्पेषवत्त्वात्संप्रतिपन्नवदिति । अत्र धावति गर्दभे व्यभिचारवारणाय हेतौ क्रमेण विशेषणद्वयम् ॥ **आद्येऽर्थापत्तिरिति** ॥ प्रमाणद्वयविरोधादि **अनुमानमेवेति** ॥ यद्यप्यत्र हेषाखुरनिष्पेषयोः सामानाधिकरण्यानवगमादुक्तहेतुरसिद्धस्त श्वेतादयः पदार्था धावदश्वधर्मिका निश्चिततद्भिन्नाश्रयाभावकत्वे सत्याश्रितत्वात् । यद्भि

कत्वेन निश्चितमाश्रितं च तत्तदाश्रितं यथा घटत्वमित्यनुमानं विवक्षितमतो न दोषः ॥ **अनध्यवस येति** श्वेतोऽश्वो धावतीत्यध्यवसायो न भवत्येवेत्यर्थः ॥ **शक्तिद्वयमिति** ॥ पदानां पदार्थेष्वन्वयबो कत्वाधानशक्तिः पदार्थानामन्वयबोधकत्वशक्तिश्चेति शक्तिद्वयमित्यर्थः ।

**श्री०—अर्थापत्तिर्भवतामिति** ॥ श्वेतरूपहेषादयः पदार्था विशकलिततयाऽवगम्यन्ते । तत्र खराश्वतर्यादिपदार्थान्तराभावश्च निश्चितः । तदन्यथाऽनुपपत्त्या धावदश्वधर्मिका एवैते पदार्था इत्यर्थापत्ति भवतां भाट्टानां मते; अस्मन्मते त्वनुमानमेवेति न पदार्थानां तत्रान्वयबोधकत्वमित्यर्थः । अनुमानप्रका स्त्वित्थम् । अयं श्वेतो धावमानाश्वो भवितुमर्हति हेषाखुरनिष्पेषशब्दवत्त्वात् संप्रतिपन्नधावदश्ववदिति अत्र खुरनिष्पेषशब्दवत्त्वमात्रं धावति गर्दभे व्यभिचारि । तत्र धावमानत्वे सत्यप्यश्वत्वरूपविशेष्याभावे विशिष्टाभावरूपसाध्याभावात् । अतो हेषेत्युक्तम् । हेषा स्यात्तुरगध्वनिरित्यभिधानान्न व्यभिचारः हेषावत्त्वमात्रं बद्धेऽश्वे व्यभिचारि । तत्राश्वत्वे विद्यमानेऽपि धावमानत्वरूपविशेषणाभावेनविशिष्टाभाव रूपसाध्याभावात् । अत उक्तं खुरनिष्पेषशब्दवत्त्वादिति । यद्यपि बद्धेऽश्वेऽपि खुरनिष्पेषशब्दोऽस्ति तथाऽपि धावदश्वनिष्ठखुरनिष्पेषशब्दविशेष एव विवक्षित इत्यदोषः ॥ **पदैरभिहितानामिति** ॥ तथा परम्परया शाब्दत्वमिति भावः ॥ **अन्वयबोधकत्वाधीनशक्तिरिति** ॥ केवलपदार्थानामन्वयबोधकत्वाभ वेऽपि पदैरभिहितानां तु पदार्थानां भविष्यतीत्युक्त्या पदार्थेष्वन्वयबोधकत्वाधानशक्तिः पदानां प्राप्तेत्यर्थः ॥ **स्मारकत्वाङ्गीकारेऽपीति** ॥ तथा च पदानां न स्वार्थे शक्तिरिति शक्तित्रयं न कल्प्यत इत्यर्थः

**च०**— पदाभिहितपदार्थकरणकान्वयबोधवादिनां भाट्टानां मतमपनिनीषुरनुवदति ॥ **अभिहि तान्वयवादिन इति** ॥

**सु०— ननु चान्विताभिधानवादिनोऽपि पदार्थेऽन्वये च शक्तिकल्पनाद्गौर समानमिति चेन्न; एकयैव शक्त्याऽन्वितार्थस्यैवाभिधानाङ्गीकारात् । तथाऽपि सामान्यान्वित भिधानवादे पदानामौत्सर्गिकी सामान्यान्वये शक्तिः पदान्तरसन्निधानाच्चागन्तुकी विशे विषया शक्तिः पदान्तरे च तदाधानशक्तिरिति शक्तित्रयं कल्पनीयमिति चेन्न; आकाङ्क्षित सन्निहितयोग्यान्विताभिधानशक्तेरेकस्या एव पदान्तरसमभिव्याहारबलेन विशेषपर्यवसानस्योक्त त्वात् । ननु च पदकदम्बकश्रवणसमनन्तरं कुतश्चिन्मानसापराधादनुपजनितपदार्थस्मृतेर्वाक्यार्थ प्रत्ययानुदयादुदयाच्चोपजातपदार्थस्मृतेरन्वयव्यतिरेकाभ्यां पदस्मारितपदार्थानां वाक्यार्थप्रत्य**

यकत्वमवसीयत इति । मैवम् । सङ्गतिस्मरणभावाभावाभ्यामन्यथोपपत्तेः । पदनिचयश्रव वाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवानभ्युपगमात् । एकैकपदश्रवणे पदार्थस्मृतिरस्ति ता दिति चेत् । किं तावता । किं सहकारिविरहिणो यत्कार्यं तदेव सहकारिलाभेऽपि । तथा संस्कारस्येन्द्रियसहकारिलाभेऽपि प्रत्यभिज्ञानुभवजनकत्वं न स्यात् । किञ्च पदार्थबोध्य वाक्यार्थस्यानुमेयस्येवाशाब्दत्वम् । पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवं च स्यादिति ॥ तदे दाह गौरवं कल्पनेऽन्यथेति ।

वा०— **एकयैवेति** ॥ न च केवलपदार्थशक्तिकल्पनापेक्षया विशिष्टशक्तिकल्पने गौरवमेवे वाच्यम् । त्वद्वच्छक्तिद्वयकल्पनाभावादित्यत्र तात्पर्यात् ॥ **आकांक्षितेति**॥ आगन्तुकविशेषविषयकशत रेवाभावे आधेयशक्तेरेवाभावेन पदान्तरतदाधायकत्वशक्तेरप्यभाव इति भावः ॥०॥ नन्वन्वयव्यतिरेकाभ्य पदार्थस्मृतेरन्वयबोधकत्वे सिद्धे प्रमाणान्तरावगतानां तेषां तदभावात्पदैरभिहितानामेव तत्कल्पने प्रमाणसिद्धेऽर्थे गौरवं न दोषायेति शङ्कते ॥ **नन्विति** ॥ **सङ्गतीति** ॥ तथा चान्वयव्यतिरेकः रन्यथासिद्ध्या न तद्बलात्पदार्थानां वाक्यार्थप्रत्यायकतानिश्चय इत्यर्थः । तर्हि मध्ये पदार्थस्मृतेर्वैयर्थ मित्यत आह ॥ **पदेति** ॥ यद्वाऽङ्गीकृत्येदमुदितम् । वस्तुतस्तु मध्ये पदार्थस्मृतेरेवाभावादन्व व्यतिरेकौ दूरोत्सारिताविल्याह ॥ **पदेति** ॥ अथवा सङ्गतिभावाभावाभ्यां वाक्यार्थप्रत्ययस्यान्यथोपपत्ते पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवाभावात्तदन्वयव्यतिरेकौ दूरोत्सारिताविल्येकवाक तया योजना द्रष्टव्या ॥ **एकैकेति** ॥ एवं चात्र क्लृप्ततया पदनिचयश्रवणस्थलेऽपि सा कल्प्य इति भावः ॥ **किं तावतेति** ॥ कल्पकाभावान्न कल्पना युक्तेत्यर्थः । गौरवशाब्दत्वादिदोषपरिजिह र्षया पराभिहितो यः परिहारस्तन्निरासकतया न चाशक्त्येत्यादिभाष्यं योजयितुं तद्दोषम ॥ **किञ्चेति** ॥

स०— **ननु** सङ्गतिस्मरणभावाभावाभ्यामन्यथोपपत्तेरित्ययुक्तम् । यत्र व्यासङ्गदशायां वाक्या बोधो न जायते तत्र पदार्थस्मरणाभावादेव तदभाव इति मयाऽपि वक्तुं शक्यत्वादित्यत आह ॥ **पदेति** पदनिचयश्रवणेत्यत्र शक्तिस्मरणमपि विवक्षितम् ।

प०— **उक्तत्वादिति** ॥ शक्तिश्चैवेत्यादित्रिपादीव्याख्यावसरे उक्तत्वादित्यर्थः ॥

**तदेतदाहेति** ॥ अन्यथा कल्पने पदार्थानामेवान्वयबोधकत्वकल्पने । प्रत्यक्षानुमानोपगमा गमार्थापत्त्यभावरूपप्रमाणषट्कादपि पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवं स्यादिति मूलार्थ इति भाव

या०— **एकैकपदश्रवण इति** ॥ अवाक्यस्थपदश्रवण इत्यर्थः ॥ **प्रत्यभिज्ञानुभवे** प्रत्युत तदपि स्मृतिजनकत्वमेवस्यादिति भावः ॥

श्री०— ननु पदस्मारितपदार्थानामेवान्वयबोधकत्वमङ्गीकार्यमन्वयव्यतिरेकाभ्यां तथाऽवग त्याशङ्कते ॥ **ननु चेति** ॥ मानसापराधो विषयान्तरसञ्चाररूपः ॥ **सङ्गतिस्मरणेति** ॥ पदा स्मरणानन्तरं शक्तिस्मरणे सति वाक्यार्थबोधस्य जायमानत्वेन पदार्थस्मृतिं विनाऽन्यथाशक्ति वाक्यार्थबोधस्योपपत्तेर्न पदार्थस्मृतिस्तदर्थं कल्प्येत्यर्थः । तदेवोपपादयति ॥ **पदनिचयेति** ॥ **तावदिति** ॥ अवाक्यस्थपदश्रवणे पदार्थस्मृतिरेव भवति । न वाक्यार्थबोध इत्यनुभवसिद्धम् । त पदार्थस्मृतीनामेवानभ्युपगमादित्युक्तमसदिति भावः । ननु सहकारिविरहिणः साधनस्य सकाशा तदेव सहकारिलाभेऽपि कुतो न भवतीत्यत आह ॥ **तथात्व इति** ॥ इन्द्रियसंनिकर्षादिरूपस र्थभावदशायां संस्कारस्य स्मृतिमात्रजनकत्वेऽपीन्द्रियसन्निकर्षादिरूपसहकारिलाभे प्रत्यभिज्ञानजनक तन्न स्यात् । किं नाम तदानीमपि स्मृतिमात्रजनकत्वमेव स्यात् । न ह्येवमस्त्यतः प्रकृतेऽपि स्मृतिरूपसहकार्यभावदशायामवाक्यस्थैकपदश्रवणस्य पदार्थस्मृतिमात्रजनकत्वेन वाक्यार्थबोधजन भावेऽपि शक्तिस्मृतिरूपसहकारिसंपत्तौ सत्यां वाक्यार्थबोधजनकत्वमेव भविष्यति । न पदार्थ जनकत्वमिति भावः ।

अनु०— **न चाशक्त्याभिधायित्वम्**

सु०— **नायं दोषः । पदानामेव पदार्थप्रतिपादनावान्तरव्यापाराणामन्वयप्रति कत्वाङ्गीकारात् । न ह्यवान्तरव्यापारस्य व्यवधायकत्वमस्तीति चेत् । किमन्वयेऽप्यर्थवत्प शक्तिरस्ति न वा । नास्तीति चेत्तत्राह ॥ न चाशक्त्येति ॥ न च तत्राशक्तं तदभिधत्त संभवति व्याघातादतिप्रसङ्गाच्च । तथा च तदवस्थं वाक्यार्थस्याशाब्दत्वं सप्तमप्रमाणा श्चेति भावः ।**

या०— ननु चक्षुषो ज्ञानजननेऽर्थसन्निकर्षस्येव पदानामन्वयबोधजनने पदार्थप्रतिपादनमव रव्यापार इत्येव कल्प्यते न त्वन्वयबोधकरणानां पदार्थानां पदबोधितत्वमात्रम् । येन प्रत्यक्षदृष्टधूमा मितवन्ह्यादेरप्रत्यक्षत्ववदन्वयस्याशाब्दत्वं पदार्थानां प्रमाणान्तरत्वं च स्यात् । पदानां च कारण

क्लृप्तत्वात्कल्पनागौरवं च नेत्याशयेन शङ्कते ॥ **नायमिति** ॥ गौरवाशब्दत्वादिरूपः । शक्त्य
काराङ्गीकारविषययोर्वाक्ययोरेकविषयकत्वासंभवाद्विकल्पमुखेनोत्थापयति ॥ **किमन्वय इति** ॥ उ
शक्तिपक्षे दोषं दृष्ट्वाऽन्वयपरत्वं वदतस्तन्मात्रे शक्तिरित्याशयः ।

स०— **नायं दोष इत्यादि** ॥ यथोक्तम् । 'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादन
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फलेति । वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्व
काष्ठानां पदार्थप्रतिपादनमि'ति । एतदप्युक्तम् न चाशक्त्येत्यादि ॥ अशक्त्याऽसाहचर्यात्स्वार्थस्मार
तत्र पदानां शक्त्यभावेऽपि अन्वयपरत्वरूपं वाऽन्वयलक्षकत्वरूपं वाभिधायित्वमुक्तरीत्या नेत्यनुव्या
योजना द्रष्टव्या ।

प०— **अतिप्रसङ्गाच्चेति** ॥ घटोऽस्तीत्यस्य पटोऽस्तीत्याद्यर्थाभिधायकत्वप्रसङ्गादित्यर्थः

श्री०— **नायं दोष इति** ॥ शक्तिद्वयकल्पनारूपो दोषोऽशाब्दत्वरूपो दोषः पद
प्रमाणान्तरत्वरूपो दोषश्च नेत्यर्थः ॥ **व्याहतत्वादिति** ॥ अभिदधत इत्युक्त्या शक्तेरेव प्रा
दित्यर्थः ॥ **अतिप्रसङ्गाच्चेति** ॥ घटपदेन पटावबोधोऽपि स्यादित्यर्थः ।

च०— **अतिप्रसङ्गादिति** ॥ घटपदस्यापि गगनपदयोराधाराधेयभावसंबन्धस्मृतिसा
गगनस्मारकतया तदभिधायकत्वप्रसङ्गादित्यर्थः ॥

अनु०— प्रवृत्तिश्च द्विधाऽन्यथा ॥

**सु०— अथ पदार्थेष्वन्वये चास्ति पदानां शक्तिः । तदा पदार्थानन्वयं च युग
पादयन्ति उत क्रमेण । नाद्यः अन्विताभिधानप्रसङ्गात् पदार्थप्रतिपादनस्यावान्तरव्याप
नुपपत्तेश्च । द्वितीये दोषमाह ॥ प्रवृत्तिश्चेति ॥ द्विधा प्रवृत्तिर्विरम्यव्यापारः । प्रसज्यत
शेषः ॥ साहचर्यात्स्वार्थान्स्मारयन्त्यन्वयपराणि पदानि अतो न दोष इति चेन्न प
विषयाणां केवलतदन्वयपरत्वानुपपत्तेः ।**

वा०— स चानुपपन्न इत्याह ॥ **पदार्थेति** ॥

प०— **द्विधा प्रवृत्तिरित्यस्यार्थो** विरम्यव्यापार इति । अन्यथेति मूलपदस्य
प्रतिपादयन्ति चेदित्यर्थोऽवतारिकायामेव व्यक्तोऽतो नोक्तः ॥ **साहचर्यादिति** ॥ हस्तिह
साहचर्यादन्यतरदर्शनेऽन्यतरस्मृतिरेवं पदानि पदार्थे शक्तिविधुराण्यपि साहचर्यादर्थान्स्मार
कारकपदम् । पदार्थाविषयाणां शक्त्या पदार्थाप्रतिपादकानामित्यर्थः ।

**या०— अतो न दोष इति** ॥ द्विरभिधानाभावान्न विरम्यव्यापाररूपो दोष इति भ
**केवलतदन्वयेति** ॥ तथाऽनुभवाभावादतिप्रसाङ्गाच्चेति भावः ॥ **पदार्थाविषयाणामिति** ॥ त
धायिनामित्यर्थः ।

**श्री०—** युगपत्प्रतिपादने दोषान्तरमाह ॥ **पदार्थेति** ॥ पदार्थानामन्वयस्य च शक्त्या
प्रतिपादकत्वे खलु विरम्यव्यापारः स्यान्न चैवमस्तीत्याशङ्कते ॥ **साहचर्यादिति** ॥ हस्तिह
साहचर्यादन्यतरदर्शनेनान्यतरस्मृतिरेवं पदानि पदार्थशक्तिविधुराण्यपि साहचर्यादर्थान् स्मार
कारकपदम् ॥ **अन्वयपराणीति** ॥ अन्वये शक्त्या तात्पर्यवन्तीत्यर्थः ॥

**सु०— अन्वयो लक्ष्यत इति चेत् । तर्हि पदार्थेषु साहचर्यात्स्मारकत्वमात्रमन्व
लक्षणैवेति पदानां न कुत्राप्यभिधानवृत्तिरिति स्यात् । तदभावे च न लक्षणापि संभ
तद्द्वारत्वात्तस्याः । एतदप्युक्तं न चाशक्त्याभिधायित्वमिति । स्मारकत्वमेवाभिधायकत्व
चेन्न अतिप्रसङ्गादिति ।**

**तस्मात्पदैरेव वाक्यार्थप्रत्ययसंभवाद्युक्तं वेदप्रामाण्यमित्यतो युक्ता ब्रह्मजिज्ञासेति सि**

**वा०—** ननूभयत्रैकत्र वा शक्त्यङ्गीकारे उक्तदूषणप्राप्तावपि न मन्मते तदवकाशः । वि
र्थप्रत्यायनार्थप्रयुक्तपदकदम्बसमभिव्याहारान्यथाऽनुपपत्त्या पदस्मारितानामर्थानामन्योन्यान्वितानां
लक्ष्यतयाऽङ्गीकारादित्याशङ्कते ॥ **अन्वय इति** ॥ पदार्थान्वये शक्त्यङ्गीकारे पदार्थेषु शक्तिप्राप्ते
त्वेऽप्यन्वये लक्षणायां पदार्थेष्वपि लक्षणापत्तिर्नानिष्टेति भावः । नन्वभिधायकत्वं नाम न शक्त्या
पादकत्वं किन्तु स्मारकत्वमात्रम् । तथा चाभिधानवृत्तेरभावेऽपि नानुपपत्तिः । न च शक्त्या
पादकत्वरूपाभिधानवृत्तेर्वाच्यार्थानुपपत्तिवाच्यार्थसंबन्धद्वारा लक्षणोपयोगात्तदभावे लक्षणैव न स्या
वाच्यम् । 'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुमि'त
लोके 'वायुर्वै क्षेपिष्ठा देवते'त्यादौ वेदे चान्वयानुपपत्त्यादेरभावेऽपि निष्प्रयोजने वाक्यप्रामाण्यानु
प्रतीयमानवाक्यार्थत्यागेन शूरादित्वं संपदो हेतुरित्याद्यर्थस्य लक्षणादर्शनेन वाच्यार्थानुपपत्त्यादेर्लक्ष
मतन्त्रत्वात्तस्माद्वाक्याप्रामाण्यापत्तिरेव लक्षणाबीजम् । तस्याश्च विशिष्टार्थप्रयुक्तसमभिव्या
पदानां स्मारितार्थमात्रपरत्वे प्राप्ते स्मरणरूपाभिधानवृत्तेरेव लक्षणाबीजत्वान्न शक्तिः प्रयोजिकेत्य
शङ्कते ॥ **स्मारकत्वमेवेति** ॥ नेति पदवदर्थानामपि पदस्मारकत्वादभिधायकत्वापत्तिरित्यर्थः ।
शब्दज्ञानमभिधाव्यापारः । अर्थस्मृत्यर्थमेव पदप्रयोगात् । न ह्यर्थज्ञानं तथा । तत्तत्का

ोपादानात् । तथा चाभिधाव्यापारोपेतानां पदानामेवाभिधायकत्वं नार्थानामिति वाच्यम् । मध्ये-
वृत्तेरनभ्युपगमेन पदप्रयोगस्य तदर्थत्वासंमतेः । अर्थस्मृत्यर्थमेव लौकिकानां पदप्रयोगेऽपि नियाम-
। शक्तेरङ्गीकर्तव्यत्वाच्च । एतेन पदेष्वेव लौकिकानामभिधायकत्वव्यवहारान्नार्थानामभिधायकत्वमिति
रम् । तन्मूलतयैव शक्तेरङ्गीकार्यताया उच्यमानत्वादिति भावः ।

स० — ननु पदार्थस्मारकत्वमेव तदभिधायकत्वमतो न कुत्राप्यभिधानवृत्तिः स्यादित्युक्तमयुक्त-
ाशयेन शङ्कते ॥ स्मारकत्वमेवेति ॥ अतिप्रसङ्गादिति ॥ धूमादिपदस्य सहचर्यवशान्महानसा-
ारकत्वासंभवेन तदभिधायकत्वप्रसङ्गादित्यर्थः ।

प० — ननु मास्त्वभिधावृत्तिः किमनिष्टमित्यत आह ॥ तदभावे चेति ॥ तद्द्वारत्वादिति ।
ार्थसंबन्धद्वारत्वाल्लक्षणाया इत्यर्थः ॥ एतदपीति ॥ अशक्त्या साहचर्येणाभिधायित्वं पदार्थस्मारकत्वं
ऽशक्त्या लक्षणयाऽभिधायकत्वं न चेति मूलार्थ इति भावः । नन्वशक्तस्याभिधायकत्वे व्याघात
क्तमयुक्तमिति भावेन शङ्कते ॥ स्मारकत्वमेवेति ॥ अतिप्रसङ्गादिति ॥ हस्तिशब्दस्यापि हस्तिप
कत्वेन तदभिधायकत्वं स्यादित्यर्थः । शक्तिश्चैवेत्यादेः प्रकृतोपयोगं दर्शयन्नुपसंहरति ॥ तस्मादिति ।
व विवरणं पदैरेव वाक्यार्थप्रत्ययसंभवादिति ॥ अभिहितान्वयादिपक्षखण्डनम् ॥ अतःशब्द
ख्यानं समाप्तम् ॥

या० — ननु पदार्थविषयाणां पदानां केवलान्वयाभिधायकत्वरूपतत्परत्वानुपपत्तावपि तल्लक्षक
ूपं तत्परत्वमुपपद्यत एवेत्याशङ्कते ॥ अन्वयो लक्ष्यत इति ॥ कथञ्चिद्वृत्तिविषयत्वान्न वाक्यार्थस
दत्वापत्तिरिति भावः ॥ एतदप्युक्तमिति ॥ अत्राशक्यसाहचर्यात्स्वार्थस्मारकत्वेन तत्र पदा
यभावेऽपि केवलान्वयवाचकत्वरूपं वाऽभिधायित्वमुक्तरीत्या नेत्यनुव्याख्यानयोजना द्रष्टव्या
स्वार्थाभिधायकानामेव पदानां तदन्वयलक्षकत्वम् । अतो नोक्तदोष इति चेत् । अत्र प्रष्टव्यम्
नां स्वार्थाभिधायकत्वं किं तत्रशक्तत्वरूपं विवक्षितमुत पूर्वोक्तं तत्स्मारकत्वरूपमेवेति । नाद्यः
रीत्याऽन्वयेऽपि शक्तिसंभवे वृथा वृत्तिद्वयकल्पनायां गौरवात् । द्वितीयमाशङ्कते ॥ स्मारकत्व
ति ॥ अतिप्रसङ्गादिति ॥ धूमादिपदस्य स्वार्थसाहचर्यवशाद्वन्ह्यादिस्मारकत्वेन तदभिधायकत्व
ङ्गादित्यर्थः ॥

च० — युक्ता ब्रह्मजिज्ञासेति स्थितमिति ॥ वेदप्रामाण्यस्य निरवग्रहं समर्थितत्वादिति भावः

सु० एवं तावद्ब्रह्मजिज्ञासाकर्तव्यत्वोपयुक्तं युक्तिजातमतःशब्दार्थत्वेन तम् । तेनाथशब्दार्थमेवातःशब्दार्थतया हेतुत्वेन व्याख्यातवतां वृत्तिकाराणमिव पुनरुक्तिदोष इत्युक्तं भवति ।

वा०— एतत्सर्वमित्याद्युत्तरग्रन्थे भाष्यकारेणातःशब्दस्योक्तार्थत्वेऽनुपपत्तेः परि चोपलक्षणतया न्यायानुपपत्तिपरिहारस्यापि सूचनाद्वृत्तिकारान्तरोक्तार्थपरित्यागेन किमित्यर्थान्तरक पपत्तिं तावत्परिहर्तुं पूर्वप्रकरणार्थानुवादमुखेन भूमिमारचयति ॥ एवं तावदिति ॥ यद्वैतत्स ग्रन्थेऽप्रकृतानामेषां हेतूनां न प्रकृतपरामर्शकातःशब्दार्थत्वं युक्तमित्याशङ्कायाः परिहारान्प्र धर्मविषयकतच्छङ्कायाश्चातःशब्दस्योक्तार्थत्वे सिद्ध एव प्रसाराद्वृत्तिकारान्तरोक्तार्थसंभवेनाप्रि युक्तम् । पौनरुक्त्येन तदनुपपत्तौ च वेदप्रामाण्यविषये तवापि तत्साम्यमिति नोक्तार्थत्वं धर्मिस्वरूपविषयशङ्कया प्रतिबन्धेन प्रथमत एवानवसरग्रस्ततयाऽनुपपत्तिपरिहारावसरे भाष्योक परिहारात्पूर्वं वृत्तिकारान्तरैरतःशब्दार्थोक्तावपि भाष्यकारैरर्थान्तरोक्त्या पौनरुक्त्येन परोक्त सूचनात्प्रकारान्तरेण स्वपक्षेऽपि पौनरुक्त्यापत्तौ पौनरुक्त्येन परोक्तार्थत्यागानुपपत्तेस्तदन्यथ प्रकारान्तरप्रसक्ततत्परिहारस्यापि सूचनात्सूचितमर्थं प्रतिपादयितुं भूमिमारचयति ॥ एवं ता अत्र वृत्तिकाराणामिति न केवलं भास्करादीनामेव ग्रहणं किन्तु तथा व्याख्याने पुनरुक्तिमुद्भा शङ्कानिरासकत्वेन तत्परिहारमभिदधतां विवरणकारादीनामपीति ज्ञेयम् । अथशब्दार्थे हेतुसमर्पकतयाऽतःशब्दं व्याचक्षाणस्य भामत्यादेश्चैतदुपलक्षणम् । अथशब्दार्थाधिकाभिधायि शब्देनाभ्यधिकाशङ्कानिरासेऽथशब्देनैव तन्निरासंसंभवात्पौनरुक्त्यतादवस्थ्यमित्याद्यदूषणमतः विरागादिस्वरूपोपस्थापकाथशब्देनैव तद्बोधकप्रमाणोपस्थापनसंभवेन साधनस्वरूपालाभशङ्कापि शब्देनापि तत्परिहारे पौनरुक्त्यतादवस्थ्यमिति द्वितीयदूषणमपि पौनरुक्त्योपपादनेनैव धर्मजिज्ञासानन्तर्यविशिष्टे ब्रह्मजिज्ञासाकर्तव्यत्वरूपे विशिष्टे साध्ये कर्मणामल्पास्थिरफल ब्रह्मज्ञानस्यानन्तस्थिरफलकतापातप्रतीतिरूपो विशिष्टो हेतुरतःशब्देन बोध्यत इति रामानुजी त्वेतत्सर्वमिति मूलवाक्यावतारिकारूपे स्यादिति ग्रन्थेऽतःशब्दो हि प्रकृतस्य हेतुतामाहेत्यत्रात प्रकृतपरामर्शकत्वासंभवसूचनेन निरस्तप्रायमिति न वृत्तिकारान्तरपक्षनिरासप्रयुक्ता न्यूनतेति

स०— अथशब्दार्थमेव अधिकारिविशेषणस्य शमदमादेर्विचारहेतुत्वमेवेत्यर्थः शब्दार्थतयेत्युक्तं विशदयति ॥ हेतुत्वेनेति ॥ शमादेर्विचारहेतुत्वेनेत्यर्थः । वृत्तिकाराणां भास्क

प०— इतःपरं स्वयं भगवतेति पर्यन्तं अतःशब्दस्योक्तहेतुपञ्चकपरामर्शित्वानुपपत्तिनि
क्रियते ॥ **युक्तिजातमिति** ॥ मोक्षजनकप्रसादहेतुज्ञानोत्पादकत्वबन्धसत्यत्ववेदादिशब्दगतसिद्धार्थप्र
ामाण्यान्विताभिधायित्वरूपयुक्तिजातमित्यर्थः ॥ **अथशब्दार्थमेवेति** ॥ अथाधिकारादिसाधनसंप
न्तरम् । अतः अधिकारादेः संपन्नत्वादिति व्याकुर्वतामित्यर्थः ।

या०— **अथशब्दार्थमेवेति** ॥ अधिकारिविशेषणतया पूर्ववृत्तस्य शमादेर्ब्रह्मविचारहेतुत्व
मर्थः । अतः शब्दार्थतयेत्युक्तं विशदयति ॥ **हेतुत्वेनेति** ॥ आनन्तर्याभिधानमुखेनाथशब्दप्रतिपा
हेतुत्वस्फुटीकरणार्थोऽतःशब्दः । अन्यथा स्फुटीकरणार्थमतःशब्दाभावेऽथशब्दस्य मङ्गलाद्यर्थान्तरप
शङ्काऽपि स्यादिति तेषां भावः ।

श्री०— **हेतुत्वेनेति** ॥ अथाधिकार्यादिसंपत्त्यनन्तरमतोऽधिकार्यादिसंपत्तेर्विद्यमानत्वावि
हेतुत्वेनेत्यर्थः ॥

सु०— तथा हि । अथशब्दस्तावदानन्तर्याभिधानमुखेन हेतुतयैव पूर्ववृत्तमवगमया
आनन्तर्यमात्रस्य विफलत्वात् अतोऽथशब्देनैव प्रकृतस्य हेतुत्वसिद्धेर्नातःशब्दोऽपेक्षितः । :
शब्दस्य हेतुत्वमार्थिकं नाभिधेयमिति चेत् । सत्यम् । तथाऽप्यार्थिके तात्पर्यात् । तस्यै
वाक्यार्थेऽन्वयात् ॥ पूर्वमीमांसाव्याख्यातृभिरप्येवमेव व्याख्यामिति चेत् । किमेताव
न हि पराङ्गं दग्धमिति स्वाङ्गदाहदुःखं निवर्तते । न चायमस्माकमस्ति दोषः । अथशब्दे
जिज्ञासाजनकमधिकारि(त्वं,स्थं धर्ममनधिकारित्वशङ्कानिरासायानुवदति, अतःशब्देन तु वि
प्रयोजनसिध्यङ्गभूतं न्यायकलापं सूत्रकारः स्वयमाचष्टे; इति कुतः पौनरुक्त्यम् ॥ अत
पुनरुक्तिभयादथात इत्येकमेव पदं येऽभ्युपगतवन्तस्तेऽपि निरस्ता भवन्ति । अर्थभेदः
अप्रसिद्धकल्पनानुपपत्तेः ।

ननु वेदप्रामाण्यादिकं पूर्वमीमांसायामुपपादितम् अतः किमर्थमत्र पुनः सूत्रितमिति ?
तदुपजीवित्वस्याप्रतिज्ञातत्वात् । एतन्मीमांसोपजीविनी खलु सेति पुराणे पठ्यते 'शब्दजा
सर्वस्य यत्प्रमाणश्च निर्णय' इति । तथाऽपि 'न विलक्षणत्वादि'त्यादिना वेदप्रामाण्यादेः
र्थनान्न तदतःशब्दार्थ इति चेन्न । एतत्प्रपञ्चत्वात् । क्वचिदर्थनिर्णये तात्पर्याच्च । तः
वक्ष्यति 'स्वरूपनिर्णयायैवेति' 'यत्र तन्निर्णयमि'ति च । तथाऽपि कार्यपरत्वनिराकरणं :
शब्दार्थस्तस्यानुपदमेव 'तत्तु समन्वयादि'ति निराकरिष्यमाणत्वादिति चेन्न । जगज्जन्म
कारणतया शास्त्रयोनित्वस्य तत्रेतरनिरासेन ब्रह्मणि समर्थनात् । न हि कार्यवादिनः
तथाऽभ्युपयन्ति येन तत्र तन्निराकरणं सङ्गच्छेत ।

वा० — नन्वानन्तर्यमात्रवाचकाथशब्दस्य न हेतुत्वसमर्पकत्वमित्यत आह ॥ **तथा हीति**
॥**नन्तर्यमात्रस्येति** ॥ जिज्ञासापुष्कलकारणास्तित्वप्रतिपत्तौ प्रवृत्तिसंभवादन्यथाऽसंभवादिति भाव
॥नन्तर्यमात्रोक्तेर्वैफल्येनाथशब्दार्थतो हेतुत्वलाभेऽप्यथशब्दस्यानन्तर्यमात्राभिधायित्वादतःशब्दस्य हे
मात्राभिधायित्वादभिधेयार्थभेदान्न पौनरुक्त्यमित्याशङ्कते ॥ **अथशब्दस्येति** ॥ आनन्तर्यमात्रस्याथशब
भिधेयत्वेऽपि तत्र तस्यातात्पर्यादार्थिके च तात्पर्यात्तदर्थेनैवाथशब्दस्यार्थवत्त्वमित्याह ॥**तथाऽपीति**॥ तात्प
षयीभूतार्थेनैवार्थवत्त्वे नियामकमाह ॥ **तस्यैवेति** ॥ अन्यथा लक्षणास्थलेऽप्यभिधेयेनैवशब्दस्यार्थवत्त्व
त्या लक्षणोच्छेदापत्तेरिति भावः । व्याख्यातृसंप्रदायानभिज्ञतावदेकमेतादृशं निराकरणमिति श
**पूर्वेति** ॥ अज्ञानमूलकत्वान्न स संप्रदाय इत्याह ॥ **किमिति** ॥ **अथशब्दो हीति** ॥ अत्र जिज्ञा
नकमित्युत्तरत्र सिद्ध्यङ्गभूतमित्युक्त्याऽथशब्देन च जिज्ञासाकारकस्यातःशब्देन च तत्प्रमाणस्यो
त्यधिकारिस्थं धर्ममनुवदतीति विषयप्रयोजनसिध्यङ्गभूतं न्यायकलापं सूत्रकारः स्वयमा
युक्त्या च शान्तो दान्त इत्यादिश्रुत्याद्युक्ताधिकारिस्थधर्मानुवादकत्वमात्रमथशब्दस्यातःशब्दस्य
यमेव विषयादिसिद्ध्यङ्गभूतवेदप्रामाण्यादिरूपन्यायकलापसूचकत्वमिति वैलक्षण्यमित्युक्तं भवति
**अर्थभेदेति** ॥ अनेनास्मन्मतरीत्याऽर्थभेदसंभवेऽथशब्दोक्तहेतुत्वोपपादकत्वेन वाऽथशब्दसमर्पि
रागादिस्वरूपलाभसंपादकत्वेन वा विवरणाद्युक्तातःशब्दव्याख्यानमलग्नकमिति सूचितं भवति
वेवं पुनरुक्तिपरिहाराय यतमानस्याथशब्देन पुनरुक्त्यभावेऽपि पूर्वमीमांसादिना तदपरिहारात्सर्वो
जस्नानमित्याशङ्कते ॥ **नन्वित्यादिना** ॥ अप्रतिज्ञातत्वादित्यनेन तथाप्रतिज्ञातवतामिव नास्म
ते तादृक्पर्यनुयोगार्हतेति सूचयति । ननु माऽस्तु तथा प्रतिज्ञा । वस्तुतस्तदुपजीवि
नरुक्तिस्तदवस्थैवेत्यत आह ॥ **एतदिति** ॥ यद्वा तदुक्तार्थस्यात्रोक्तिमात्रेणास्य तेन पौनरुक्त
नेन तस्य पौनरुक्त्यापत्ताऽस्य तदुपजीवित्वं वक्तव्यम् । तच्च रामानुजीयानामिवास्मत्प्रति
प्रारेणोत वास्तवाभिप्रायेणाहोस्वित्तदुपजीवनेनैवोपपत्तौ पुनःसूत्रणमयुक्तमिति । नाद्यः इत्य
**तदिति** ॥ न द्वितीय इत्याह ॥ **एतदिति** ॥ तृतीयपक्षं च पूर्वमीमांसायां तन्निरूपणस्
विसङ्गतिशून्यत्वात्तदुपजीवनं न युक्तमित्याशयेनात एव न तत्रोक्तस्यात्रोपजीवनमित्युत्तरग्रन्थे
राकरिष्यतीति द्रष्टव्यम् । इत्यादिनेत्यादिपदेनाभिमान्यधिकरणस्य द्वितीयाध्यायीयतृतीयचतुर्थपादयो
हणम् । साधारणं परिहारमभिधाय तृतीयादिपादांशे विशेषेण तमाह ॥ **क्वचिदिति** ॥ अर्थनिप
यदाद्युत्पत्त्यादिरूपप्रमेयनिर्णये । अत्र तत्पादद्वयभाष्यं ज्ञापकत्वेनाह ॥ **यथेति** ॥ पूर्वप
कृताप्रव्याख्यानानुसारेण शङ्कते ॥ **तथाऽपीति** ॥ तस्यैवासङ्गतत्वान्न तदनुरोधेन पौनरुक्त्यशङ्का
तेत्याह ॥ **न जगदिति** ॥

स० — ननु स्यादेतदेवं यदि भास्करादिभिरित्थं व्याख्यातं स्यात् । नैतदस्ति । किन्त्वथ
ादिसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युक्ते; कुतः, न हि रासभसंपत्त्यनन्तरं घटः कर्तव्य इत्याशङ्कायां
धेकारिविशेषणतया प्रकृतस्य शमादेः रासभतुल्यता तस्य जिज्ञासाहेतुत्वादित्यतःशब्देनोच्यत इति ।
। चैवं क्व पौनरुक्त्यं इत्यत आह ॥ **तथा हीति** ॥ सत्यमेवं तैर्व्याख्यातमिति तथापि शमाद्यानन्तर्य-
ारस्य यदाऽथशब्देनोक्तं तदा शमादेस्तन्नियतपूर्ववर्तित्वरूपं हेतुत्वं लब्धमेव । अन्यथाऽऽनन्तर्यकथनं
ेमापद्येत । तस्य च पुनरतःशब्देनाभिधाने कथं न पौनरुक्त्यम् । न चोक्तशङ्कानिरासायातःशब्द
वाच्यं हेतुत्वस्याथशब्देनैव लाभे शङ्काया एवानुदयादित्याशयः ॥ **न विलक्षणत्वादित्यादिनेति** ॥
देपदेन समस्ताध्यायग्रहणम् । तत्र ह्युक्तार्थे युक्त्यादिविरोधपरिहारेण वेदप्रामाण्याद्युपपादनात् ।
**चेदर्थनिर्णय इति** तृतीयचतुर्थपादयोरित्यर्थः । स्वरूपनिर्णयायैवेत्यस्य पूर्ववाक्यं 'करिष्यन्नर्थदेवा-
ूतजीवपरात्मनामि'ति । यत्र तन्निर्णयमित्यस्य च पूर्ववाक्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव
ते' इति ।

प० — कथं तेषां पौनरुक्त्यमित्यत आह ॥ **अथशब्दस्तावदिति** ॥ **पूर्ववृत्तमिति** ॥
नन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युच्यते । तत्पूर्वसंपन्नमानन्तर्यप्रतियोगिभूतं वस्तु जिज्ञासाकर्तव्यतायां
ेत्वेनावगमयति । अन्यथा यत्किञ्चिदानन्तर्यस्य कार्यमात्रेपि संभवेनाथानन्तरमिति न वक्तव्यमेव
फलाभावादिति भावः ॥ **तस्यैवेति** ॥ तात्पर्यविषयस्येत्यर्थः । वाक्यार्थे जिज्ञासाकर्तव्यत्वादि-
र्थे ॥ **एवमेवेति** ॥ अथाध्ययनानन्तरं अतः अध्ययनस्य निर्वृत्तत्वाद्धर्मजिज्ञासाकर्तव्येत्यर्थः ॥
**धिकारित्वशङ्कानिरासायेति** ॥ यद्यपि ब्रह्मादिपदेन चिदचिद्विलक्षणविषयसिद्ध्यैव तज्ज्ञानादिद्वार-
फलसिद्ध्या मुमुक्षुरधिकारी सिद्ध इत्यनधिकारिकत्वशङ्काविषयार्पकब्रह्मपदादिनैव निरस्ता तथापि
क्षुमात्रस्याधिकारित्वे स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरेत्यादिविरोधेन प्राप्ताया पुनर्निरधिकारिकत्व-
। तस्याः निरासाय मुक्तियोग्यत्वाध्ययनशमादिरूपा साधारणधर्मरूपमधिकारित्थं धर्मविशेषं मन्दा
ोत्तमत्वेन त्रिविधा ह्यधिकारिण इत्यादिभाष्योक्तवचनजातेनापशूद्राधिकरणन्यायेन च अध्ययनमात्रवत
ज्ञानपादीयाधिकरणोक्तन्यायेन च प्राप्तमनुवदतीत्यर्थः ॥ **विषयप्रयोजनेति** ॥ अतः पदस्य हि
हेतुप्रसादजनकज्ञानकारणत्वात् । बन्धस्य सत्यत्वात् । वेदस्य सिद्धार्थवस्तुपरत्वात् । वेदस्य
ाण्यात् । अन्विताभिधायकत्वाच्चेत्येवं युक्तिपञ्चकपरत्वेनातःशब्दः पञ्चधा व्याख्यातः । तत्राद्यद्वयं
जनसिद्ध्यङ्गभूतम् । अन्त्यत्रयं तु विषयसिद्ध्यङ्गभूतमितिविषयप्रयोजनसिद्ध्यङ्गभूतन्यायकलाप-
ुक्तम् ॥ **तेऽपि निरस्ता इति** ॥ एवमत इति भिन्नं पदमुपेत्याप्यपौनरुक्त्याऽर्थान्तरं वदन्तो
ास्पतिप्रभृतयोऽपि चन्द्रिकायां निरस्ता ध्येयाः । रामानुजप्रक्रियामनुसृत्य शङ्कते ॥ **ननु वेदेति** ॥

**राण इति** ॥ भाष्योक्तस्कान्दपुराण इत्यर्थः । शब्दजातस्येति कर्तरि षष्ठी । यः शब्दसम्
ियमाणो निर्णयो यत्प्रमाणः यद्ब्रह्मसूत्रमूलक इत्यर्थः । अन्यार्थं तु जैमिनिरित्याद्युक्तविस्तृतिरूपत्व
ैतन्त्रस्यैतदुपजीवित्वं ध्येयम् ॥ **क्वचिदिति** ॥ द्वितीयाध्यायतृतीयचतुर्थपादयोर्वेदवचसामन्यो
रोधपरिहारेण प्रामाण्यसमर्थनं तदर्थनिर्धारणाभिप्रायमित्यर्थः ॥ **वक्ष्यतीति** ॥ वियत्पादोप
तथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् । स्वरूपनिर्णय।
वनानां परस्परम् । पादेनानेनाविरोधं दर्शयत्यमितद्युतिरिति । तथा द्वितीयस्य चतुर्थपादोपक्रमे च
्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते । यत्र तन्निर्णयं देवस्सुविशिष्टोपपत्तिभिः । करोती'ति
्यतीत्यर्थः ॥ **तत्रेति** ॥ तत्तु समन्वयादित्यत्रोपक्रमादिबलेन वेदतात्पर्यस्य ब्रह्म निर्णेष्यमाणत्वाि
वः । यद्वा सिद्धार्थबोधने फलाभावात्कार्यपरत्वं वेदान्तानामिति शङ्का तत्त्वित्यत्र निरस्यत ः
मानुजीयशङ्का सिद्धान्तरीत्या परिहार इति ध्येयम् ॥

**या०**— इममेव पराभिप्रायं पौनरुक्त्योपपादनाय विशदयति ॥ **तथाहीत्यादिना** ॥ **ना**
**द्धोऽपेक्षित इति** ॥ तथा च तदुक्तौ पौनरुक्त्यमिति भावः । अथशब्दस्यानन्तर्यमात्राभिधायित
ः शब्दस्य च हेतुत्वाभिधायित्वान्न पौनरुक्त्यमिति शङ्कते ॥ **अथशब्दस्येति** ॥ अनभिधेयत्वमः
रोति ॥ **सत्यमिति** ॥ तर्हि न पौनरुक्त्यं तत्राह ॥ **तथाऽप्यार्थिक इति** ॥ अभिधेये आनन्तर्यम
त्पर्यस्य वैफल्यप्रसङ्गेनासम्भवादिति भावः । आर्थिकार्थे तात्पर्येऽपि तस्यानभिधेयत्वान्न पौनरुक्त्यमि
ाह **तस्य चेति** ॥ तात्पर्यविषयस्यैवेत्यर्थः । तथा च तात्पर्यविषयीभूतप्रमेयैक्यात्पौनरुक्त्यं स्यादे
ावः । न च मङ्गलाद्यर्थान्तरपरताशङ्कानिरासरूपप्रयोजनसद्भावान्न पौनरुक्त्यमित्याशङ्कनीयम् । वाक्य
मन्वयाभावादिना तच्छङ्काया अत्रानवतारादिति पूर्वमेवोक्तत्वात् । अन्यथा ब्रह्मादिशब्देष्व
ात्यादिपरताशङ्कापरिहाराय पदान्तरप्रयोगप्रसङ्गादिति ॥ **एवमेवेति** ॥ आनन्तर्याभिधानमुखेन स्वाध्या
ययनस्य धर्मजिज्ञासाहेतुत्वमथशब्देनोक्तमतःशब्देन स्फुटीक्रियत इति व्याख्यातमित्यर्थः ॥ **अप्रति**
**त्वादिति** ॥ अथशब्देनाप्रतिपादनादित्यर्थः । यथा रामानुजीयादिभिरथशब्दाभिधेयानन्तर्यावधिभ
र्मज्ञानस्य पूर्वमीमांसासाध्यत्वेनैतन्मीमांसायास्तदुपजीवित्वमुक्तं न तथाऽस्माभिरुक्तम् । अथशब्द
र्यावधिभूतस्यास्मदभिमतस्याधिकारिविशेषणस्य शमादेः पूर्वमीमांसानपेक्षत्वादिति भावः ॥
**लक्षणत्वादित्यादिनेति** ॥ अत्रादिपदेन समस्ताध्यायग्रहणम् । तत्र ह्युक्तार्थे युक्त्यादिविरोधपरिहा
दप्रामाण्योपपादनात् । नाभाव उपलब्धेर्वैधर्म्याच्च न स्वप्नादिवत् पृथगुपदेशादित्यादिना च द्विती
ादोपात्तस्य प्रपञ्चमिथ्यात्वनिराकरणतत्सत्यत्वजीवेशभेदादेः समर्थनादित्यर्थः ॥ **क्वचिदर्थेति**

ृतीयचतुर्थपादयोरित्यर्थः । स्वरूपनिर्णयार्थैवेत्यस्य पूर्ववाक्यं 'करिष्यन् अधिदैवाधिभूतजीवपरमात्मन
ःति । यत्र तन्निर्णयमित्यस्य च पूर्ववाक्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यत' इति
नेराकरिष्यमाणत्वादिति ॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते यावताऽऽम्नायस्य क्रिय
वादानर्थक्यमतदर्थानामिति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यक्रियार्थत्वा
ाङ्कापरिहाराय तत्तु समन्वयादिति सूत्रस्य परेण व्याख्यातत्वात्तदनुसारेणेयमाशङ्केति ध्येयम् ।

श्री०— आनन्तर्यमात्रस्येति ॥ अकारणानन्तर्यस्येत्यर्थः ॥ अत इति ॥ कारणानन्तर्य
क्तव्यत्वादित्यर्थः ॥ ताभ्यामुपयन्तीति ॥ जगज्जन्मादिकारणतया शास्त्रयोनित्वेनेत्यर्थः ॥

अनु०— एतत्सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात् ॥
उक्तं विद्यापृथक्त्वात्तु संक्षेपेणात्र सूचितम् ॥

सु०— स्यादेतत् । तथाप्येतदयुक्तम् । अतःशब्दो हि प्रकृतस्य हेतुत्वमाह ।
पुनर्वेदप्रामाण्यादिकमेव साक्षात् । न चात्र तत्प्रकृतम् । अस्यैव प्रथमवाक्यत्वात् । पूर्वमी
साप्रकृतोपजीवनं तु नेष्यत एव । न च कार्यनिराकरणं तत्प्रकृतम् । तत्कथमस्यार्थस्य
शब्दार्थतया व्याख्यानम् । अन्यथोत्सूत्रिताभिधाने भाष्यत्वव्याघातः ॥ किञ्चायमर्थो
जिज्ञासाकर्तव्यतायामत्यन्तोपयुक्तो विस्तरादेव पूर्वमीमांसायामिव वक्तव्यः सूत्रकृतैव ।
इति सङ्क्षेपेण कस्मादुक्त इत्याशङ्काद्वयं परिहरति ॥ एतत्सर्वमिति ॥ यस्मादित्यर्थे हिशब्द
तुशब्दस्यात्र त्विति संबन्धः । तस्मादित्यर्थे वा । यस्मादेतत्सर्वं प्रमेयं ब्रह्मतर्काभिधेय
शास्त्रे विस्तरादुक्तम् । तस्मादत्र मीमांसोपक्रमेऽत इति सङ्क्षेपेण सूचितमित्यनेन शङ्काद्वय
परास्तम् । ब्रह्मतर्कोक्तत्वेन प्रकृतत्वादिदं(दतः)शब्देन परामर्शो युज्यते । तत्रैव विस्त
क्तत्वादत्र सङ्क्षेपकरणं चोपपद्यत इति ।

ग्रन्थान्तरोक्तस्य कथमत्र प्रकृतत्वम् । तथात्वे वा कुतो न पूर्वमीमांसोक्तपरामर्शो
मिष्यत इत्यत उक्तम् ॥ तर्कशास्त्र इति ॥ तर्कशास्त्रं हि मीमांसाङ्गमिति वक्ष्यति ॥ ब्र
विस्तरेणोक्तत्वमत्र सङ्क्षेपकरणस्य घटकमात्रं न नियामकम् । तत्र विस्तरेणोक्तस्या
विस्तरेणोक्तौ बाधकाभावात्प्रस्थानभेदेनापुनरुक्तेरित्यत उक्तम् ॥ विद्येति ॥

वा०— उत्तरमूलस्य बुद्धया विवेकेन शङ्काद्वयपरिहारकत्वेन योजयितुं शक्यत्वात्तद शङ्काद्वयमुत्थापयति ॥ **स्यादेतदिति** ॥ पूर्वमीमांसायामिवेत्युक्तिरुत्तरत्र तदनौचितीं प्रदर्शयितुमुप द्रष्टव्यम् । हिशब्दस्य यस्मादित्यर्थकत्वस्यावश्यकत्वाद्धेतुहेतुमद्भावेन व्याख्याने नात्रत्यतुशब्दस्य प्रयोजनमित्यत आह ॥ **तस्मादित्यर्थे वेति** ॥ **इदंशब्देनेति** ॥ यद्यप्येतदोऽनित्युक्तत्वादत इ रूपमित्येतच्छब्देनेत्येव वक्तव्यम् । तथाऽप्येतदोऽनित्यत्रेदम इशित्यत इदम इत्यनुवृत्तिरस्त्विर वाऽयं प्रकृतोऽत इतिशब्द इदंशब्द इत्याशयेन वेदंशब्देनेत्युक्तमिति द्रष्टव्यम् । तर्कशास्त्र तत्सिद्धेरिति वक्ष्यमाणमीमांसाङ्गत्वयुक्तिसूचकत्वेनोक्तशङ्कापरिहारकत्वमित्याह ॥ **तर्केति** ॥

स०—**इदंशब्देन परामर्श इति** ॥ अयं चासौ शब्दश्च इदंशब्दः तेन सौत्रातःशब्दे लभ्यते । तेनातःशब्दस्यैतदोऽशित्यनेनैतदोऽशित्यादेशे निष्पन्नतया कथमिदंशब्देनेत्युक्तमिति ऽनवकाशः । एवमग्रेऽपि । अथवेदम इश् इत्यतः एतदोशितिसूत्रे इदंशब्दस्यानुवृत्तेर्वक्तुमशक्य इदम्शब्दादपि अशुप्रत्ययोपपत्तौ अत इत्यस्येदं रूपत्वसंभवात् इदंशब्देनेति युक्तमिति ।

प०—**एतदिति** ॥ पञ्चधाऽतःशब्दस्य व्याख्यानमध्ये यदाद्यं ज्ञानी प्रियतमोऽतो मे इ कृतं मोक्षहेतुप्रसादजनकज्ञानकारणार्थकत्वरूपं व्याख्यानं तस्य 'इत्यादेर्न हरिं विना । ज्ञानस्वभा स्यान्मुक्तिः कस्यापि हि क्वचिदि'त्यत्रोक्तदिशोपपन्नत्वेऽपि बन्धसत्यत्वाद्यर्थचतुष्टयपरत्वव्याख्यान मित्यर्थः ॥ **प्रकृतस्य हेतुत्वमाहेति** ॥ अत इति एतच्छब्दस्य पञ्चम्यर्थकतसिलन्तस्य रू एतस्मादित्यर्थे पञ्चम्यास्तसिलिति पञ्चम्यास्तसिलादेशे एतदोशिति प्रातिपदिकस्याशादेशे अत निष्पन्नत्वात् । तथा चात इति प्रातिपदिकाकारेण प्रकृतं परामृश्य तसिल्प्रत्ययेन हेतुत्वं जि कर्तव्यतां प्रतिवक्तीत्यर्थः ॥ **न पुनर्वेदप्रामाण्यादिकमिति** ॥ यद्यपि बन्धसत्यत्वादिकमिति तथाऽप्यतो यथार्थबन्धस्येत्येतद्व्याख्यानावसरे बन्धमिथ्यात्वमाशङ्क्य सेयमाशङ्काऽतःशब्देनापेक्षित सूचकेन निराकृतेति ग्रन्थेन बन्धसत्यत्वपरामर्शित्वमुपपादितं मत्वा प्रामाण्यादीत्येवोक्तम् । आदिप तस्य संग्रहः । नन्वेवं तेनैव न्यायेन वेदप्रामाण्यादिपरामर्शित्वमपि नानुपपन्नमिति चेत् स नकारान्तरेणाप्युक्तार्थपरामर्शित्वोपपादनायेयमाशङ्केति अदोषः ॥ **तत्प्रकृतमिति** ॥ पूर्वमीमां व नेत्यर्थः । तत्र कार्यपरत्वस्यैव पूर्वमीमांसकैः वर्णनादिति भावः ॥ **अतःशब्देन परामर्शो इति** ॥ क्वचिदिदंशब्देनेत्यपि पाठः । स च लेखकदोषमूलो ध्येयः । अयं चासौ शब्दश्च इद तेन अतःशब्देनेति यावदिति वाऽर्थो ध्येयः ।

**या०**— अभ्युपेत्याह ॥ **न च कार्यनिराकरणमिति** ॥ एवमग्रेऽपि ॥ **वक्ष्यतीति** ॥ णन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥' इत्यत्रेति ।

**श्री०**— **अयमर्थ इति** ॥ वेदप्रामाण्यादिरूप इत्यर्थः ॥

**च०**—**अतःशब्दो हि प्रकृतस्य हेतुत्वमाहेति** ॥ एतदोऽनति प्रकृत्यंशस्यानादेशे तत्प्रकृतिक- ाश्च पञ्चम्यास्तसिलिति तसिलादेशे निष्पन्नोऽतःशब्दः । सर्वनामरूपप्रकृत्यंशोपस्थाप्यस्य प्राचीनमते त्वरूपं हेतुत्वं नव्यमतदिशा ज्ञानज्ञाप्यत्वं वा आहेत्यर्थः । प्रपञ्चितं चैतच्चन्द्रिकाभावदीपिता- भिः । **तर्कशास्त्रं हि मीमांसाङ्गमिति वक्ष्यतीति** ॥ 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनमि'त्यत्रेत्यादिः ॥

**सु०**— एतदुक्तं भवति । अस्ति तावत्तर्कमीमांसाविद्ययोः पृथक्त्वम् । वेदाः सर्वा- **ा सत्यमायतनमिति पृथक् श्रवणात् । वेदाश्चत्वारः सर्वाङ्गानीति पुराणस्मृतितर्कशास्त्र- तानि षडङ्गानि गृह्यन्ते । सत्यमिति मीमांसा । तथा च चतुर्दशविद्यास्थानान्युक्तानि न्ते । तदर्थं च व्युत्पाद्यभेदेनावश्यम्भवितव्यम् । ततश्च प्रमेयव्युत्पादनपरे मीमांसाशास्त्रे ास्त्रव्युत्पाद्यं वेदप्रामाण्यादिकं यदि विस्तराद्व्युत्पाद्येत तदा विद्याभेदो न स्यात् । ेण सूचने तु नायं दोषः । प्रायिकत्वाद्विद्याभेदस्य ॥ सर्वथाऽन्योन्यासंस्पर्शेऽङ्गाङ्गिभावा- त्तेः । अतोऽत्रास्य सर्वस्य संक्षेपकरणमेवोचितमिति ॥ अनेन जैमिनीयानां प्रमाणलक्ष- ्निरूपणं नातीव मीमांसायां सङ्गतमिति सूचितं भवति । अत एव न तत्रोक्तस्यात्रोप- नमिति ।**

**वा०**— ननु विद्यापृथक्त्वोक्तेस्तत्रोक्तस्यात्र विस्तरेणोक्तौ बाधकाभावादिति पूर्वोक्तदोषपरिहारा- त्रमित्येव नापि त्वपौनरुक्त्यसंपादकत्वेन प्रतिकूलत्वमेवेत्यतस्तदभिप्रायं विद्यापृथक्त्वे साधकं वदन्ने ॥ **इदमुक्तं भवतीति** । यद्यपि 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायण पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांस द्यायतनं त्रयमि'ति तलवकारोपनिषद्भाष्योदाहृत एतद्व्याख्यानरूपे प्रमाणे पुराणादीनां वेदशब्दे ामङ्गशब्देन तु शिक्षादीनां स्मृतिशब्दोक्तधर्मशास्त्रस्यैव ग्रहणमित्युक्तं तर्कशास्त्रस्य तु न केनापि

तथाऽपि वेदान्तरङ्गतया वेदशब्देन गृहीतानामपि पुराणादीनामितिहासपुराणाभ्यां वेदं समुपबृंहये
रीत्या वेदार्थप्रतिपत्तिहेतुतया सर्वाङ्गानीत्यत्रत्यसर्वशब्दस्वारस्यानुरोधेन च शिक्षादिवदङ्गशब्देनै
युक्तम् । 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशे'
न्यायशब्दोक्ततर्कशास्त्रस्याप्युपलक्षणत्वेन प्रमाणे ग्रहणम् । वेदशब्दश्च मुख्यवृत्त्या चतु
इत्यभिप्रेत्योपनिषद्वाक्यं व्याख्याति ॥ **वेदा इत्यादिना** ॥ अत्र पुराणशब्दः प्रमाणानुसारे
पञ्चरात्रमूलरामायणानामुपलक्षणमिति बोध्यम् । 'निर्णीयते यतः सम्यगिदं सत्यमिति
श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया । सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चये' इति प्रमा
निधाय सत्यमिति मीमांसेति भाष्यमनुकरोति । नन्वेषामेव कुतोऽत्रोपपादनं कुतश्च प्रमाणा
तर्कशास्त्रस्यात्र सङ्ग्रह इत्यत आह ॥ **तथा चेति** ॥ अन्यथा यथास्थितप्रमाणानुसारेणाधि
पुराणस्य भारतादित्रयस्य चैकत्वविवक्षायां त्रयोदशत्वस्य वा प्राप्त्या चतुर्दशविद्यास्थानानि
स्युरिति भावः । नन्वेवं सङ्क्षेपेण सूचनमपि न स्यात् । एवं च प्रायिकत्वस्याप्यनाश्रयणेन मु
विद्याभेदः सिध्येदित्यत आह ॥ **सर्वथेति** ॥

स० — **अत एव न तत्रोक्तस्येति** ॥ अप्रसङ्गतप्रतिपादकत्वादेवेत्यर्थः ।

प० — **इति पृथक्श्रवणादिति** ॥ तलवकारोपनिषदि श्रवणादित्यर्थः । कथमत्र मीम
स्तर्कशास्त्रात्पार्थक्योक्तिरित्यतस्तद्वाक्यं व्यनक्ति ॥ **वेदाश्चत्वार इति** ॥ यद्यपि 'ऋग्यजुःसामाथ
पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं
स्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं तथे'ति तलवकारभाष्येऽन्यथा वेदादिस्वरूपमु
तर्कशास्त्रं च नोक्तम् । तथापीहानुग्राह्यप्रमाणानां वेदपदेन ग्रहणं वेदोपबृंहकत्वेन तदङ्गत्वात्पु
अङ्गपदस्वारस्येन सर्वाङ्गानीत्यनेन पुराणादीनां ग्रहणम् । अनुक्तस्यापि तर्कस्योपलक्षकत्वमु
शिक्षाद्यमित्यत्राद्यपदेन वा ग्रहणमभिप्रेत्य व्याख्यानान्तरमित्यदोषः । षडङ्गानि शिक्षाकल्पो व
निरुक्तं छन्दोज्योतिषमिति षडङ्गानि । 'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । पुराणं धर्मश
विद्या ह्येताश्चतुर्दशे'ति स्मृतिं हृदि कृत्वाह ॥ **तथाच चतुर्दशेति** ॥ **अनेनेति** ॥ ब्रह्मतर्कस
कथनेनेत्यर्थः ॥ **प्रमाणलक्षणादिनिरूपणमिति** ॥ तद्धि पद्धत्यादौ व्यक्तम् ॥

या० — नन्वत्र कथं मीमांसायास्तर्कशास्त्रात्पार्थक्योक्तिरित्यतस्तद्वाक्यं व्याचष्टे ॥ **वेदा
इति** ॥ नन्विदं व्याख्यानं 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव
भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्वि

त्रयम्' इति तलवकारभाष्योदाहृतप्रमाणविरुद्धम् । तत्र पुराणस्य वेदान्तर्भावकथनात् तर्कशास्त्रस्याकथनाच्चेत्यत आह ॥ **तथा च चतुर्दशेति** ॥ तथा च 'पुराणन्यायमीमांसाधर्मशा माश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति प्रमाणान्तरोक्तविद्यास्थानवि माश्रित्य प्रकृतोपयोगार्थमित्थं व्याख्यातम् । एवं च प्रमाणद्वयबलाद्विवक्षाभेदेन व्याख्यानद्व श्रुत्यभिप्रेतमिति भावः ॥ **प्रायिकत्वादिति** ॥ प्राधान्याभिप्रायकत्वादित्यर्थः । तथा च यत्र प्राधान्येन प्रतिपाद्यते सा विद्या तदर्थेति भावः । ननु किं प्रायिकत्वाङ्गीकारेण विद्याभे भयात्सङ्क्षेपेणापि सूचनं नाङ्गीकार्यमित्यत आह ॥ **सर्वथाऽन्योन्येति** ॥ **जैमिनीयानामि** जैमिनीयानामित्युक्त्या प्रमाणलक्षणादिकं सूत्रार्थतया शबरादिभिरेव वर्णितम् । न तत्सूत्र जैमिनेरभिप्रेतमिति सूचयति ॥ **अत एवेति** ॥

अनु०— प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ॥
मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥

सु०— तदेव प्रपञ्चयति ॥ प्रमाणेति ॥

अथवा विद्यापृथक्त्वादित्युक्तम् । तत्रास्तु तर्कमीमांसाविद्ययोः पृथक्त्वम् तथ विस्तरेण वेदप्रामाण्यव्युत्पादने को दोष इत्याशङ्क्य; विद्यापृथक्त्वं च व्युत्पाद्यपृथक्त्वादेव, तदित्याह ॥ प्रमाणेति ॥ प्रमाणानि प्रत्यक्षादीनि त्रीणि । न्यायोऽनुमानाङ्गभूता व्याप्तिः

अथवा न्यायो व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनात्मकस्तर्कः । तस्यानुमानात्मकत्व प्रमाणानुग्राहकत्वातिशयवत्त्वज्ञापनाय पृथगुक्तिः ।

अथवा प्रमाणे प्रत्यक्षमागमश्च, न्यायोऽनुमानं, तस्य मीमांसायामभ्यर्हितत्वाद्भेदे न्यासः ।

अथवा प्रमाणानां प्रत्यक्षादीनां न्यायः प्रकारः स्वरूपसङ्ख्याविषयव्यवस्था । सच्छिक्षोद्देशलक्षणविभागपरीक्षाभिर्निरूपणम् । तर्कशास्त्रत इति तृतीयार्थे तसिः । तु मीमांसा त्विति संबध्यते । तत्सिद्धैस्तर्कशास्त्रव्युत्पादितैः । मेयशोधनं प्रमेयस्यारोपित निराकरणेन स्वरूपनिरूपणं क्रियते । मीमांसाशास्त्रत इति शेषः । अयं व्युत्पाद्यभेदं स्याद्यदि मीमांसाशास्त्रेऽपि वेदप्रामाण्यादिकं विस्तराद्व्युत्पाद्येत । तदभावे च विद्याभेद न स्यात् । अतः सङ्क्षेपेणैवास्य सूचनमत्र युक्तमिति भावः ॥ अत्र तत्सिद्धैरिति वदता शास्त्रस्य मीमांसाङ्गत्वमुक्तम् । तेन तत्र प्रकृतस्यात्र परामर्शो नानुपपन्न इति सूचितं भवा

व्या०—एवं विद्यापृथक्त्वोक्त्या तदुपपादकस्य प्रतिपाद्यपृथक्त्वस्यार्थतो लाभमभिप्रेत्य पाद्योपपादकताप्रकारं प्रदर्श्य प्रतिपाद्यपृथक्त्वस्वरूपप्रदर्शनेन तत्प्रपञ्चकतया प्रमाणेति वाक्यं यो अधुना पूर्ववाक्योक्ते विद्यापृथक्त्वे हेतुत्वेन प्रतिपाद्य पृथक्त्वमभिप्रेत्य तत्स्वरूपं प्रमाणेतिवाव इत्युत्तरवाक्यस्वारस्यानुरोधेन पक्षान्तरमाह ॥ **अथवेति** ॥ अङ्गिप्रायेऽङ्गोपादानं न स्वरसमित्यत **अथवेति** ॥ पृथगुक्तेः प्रयोजनेऽवश्यवक्तव्ये किमनुमानविशेषोपादानेन तत्सामान्यस्यैव ग्रहणमर च न्यायपदस्वारस्यमधिकम् । पूर्वपक्षे न्यायपदस्य प्रमाणपदस्य चास्वारस्यमित्याशयेनाह ॥ अ प्रयोजनोत्प्रेक्षाशून्यमुभयपदस्वारस्योपेतं पक्षान्तरमाह ॥ **अथवेति** ॥ अत्र न्यायसच्छिक्षाशब्द स्वत्यायार्थभेदमाह ॥ **न्याय इत्यादिना** ॥ पञ्चमीतसिलो हेतुत्वमात्रलाभेऽपि कारणत्वं कर्तुमाह ॥ **तृतीयार्थ इति** ॥ मेयशोधनस्य मुख्यस्यासंभवादुपचारेण प्रकृतोपयुक्तमर्थमाह ॥ मे तर्कशास्त्रात्प्रतिपाद्यभेदकथनावसरे प्रमेयान्तरप्रतिपादकत्वे प्रतिपाद्ये मीमांसाया वक्तव्ये स्वप्रतिप कथनं नोपपद्यत इत्यतः शास्त्रत इत्यस्यानुषङ्गेण व्याख्याति ॥ **शास्त्रत इतीति** ॥ तथा च म शास्त्रत इति समासैकदेशोक्तिर्भाष्य इति भावः । उक्तस्य प्रतिपाद्यभेदस्य तात्पर्यमाह ॥ **अयं**

स०— **मीमांसाशास्त्र इति शेष इति** ॥ अत्र शास्त्रत इत्येव शेषः । न तु समा मीमांसेत्यस्य श्रवणात् । तथा च मूले मीमांसाशब्दोऽविभक्तिकप्रातिपदिकनिर्देश इति सूचितं म पूर्वं तुशब्दो मीमांसा त्विति संबन्धत इत्युक्तिस्तु यथास्थिताभिप्रायेण । वस्तुतस्तु मीमांसाश इति तुशब्दसंबन्धो द्रष्टव्यः । यद्वा मेयशोधनं मीमांसेति सामानाधिकरण्यम् । मेयशोधनलक्षणा म तु मीमांसाशास्त्रतः क्रियत इति योजना । अस्मिन् पक्षे तुशब्दस्य मीमांसेत्यनेनैव संबन्धः इति पदस्यानुवृत्तिः । मीमांसाशास्त्रत इत्येतावतः शेषत्वमिति द्रष्टव्यम् ।

प०— **तृतीयार्थे तसिरिति** ॥ प्रतियोगे पञ्चम्यास्तसिरित्यत्र आद्यादिभ्य उपसंख्यान सर्वविभक्त्यर्थे तसेरुक्तत्वात् आद्यादेश्चाकृतिगणत्वादिति भावः । आद्यादिभ्यः प्रथमादिभ्य इत्येके । मेयशोधनरूपं मीमांसाविचारणं मीमांसाशास्त्रेण क्रियत इति मूलयोजनामुपेत्याह ॥ **मी शास्त्रत इति शेष इति** ॥ मीमांसेति प्रातिपदिकमात्रनिर्देशः । शास्त्रत इत्येव शेष इत्येके ॥

श्री०— **तच्चैतदिति** ॥ तच्च विद्यापृथक्त्वम् । एतद्वक्ष्यमाणमित्यर्थः । मीमांसा मेयश मित्यत्र क्रियत इत्यन्वयस्वारस्याय मीमांसपदमनूद्य तदनन्तरमध्याहार्यं दर्शयति ॥ **मीमांसाशास्त्रत शेष इति** ॥ तथाच मीमांसाशास्त्रतस्त्वित्यन्वयः ।

अनु०— ब्रह्मतर्कं च भगवान्स एव कृतवान्प्रभुः ॥

सु०— ननु ममदीर्घवद्धेत्यादिना तर्कशास्त्रं निराकरिष्यते । तत्कथं तस्य ब्रह्ममी ङ्गत्वम् । विरुद्धयोरङ्गाङ्गिभावस्य व्याहतत्वात् । तथा च कथं तत्रोक्तस्यात्रेदंशब्देन परा कथं च ततो भेदसिद्धये व्युत्पाद्यभेदोपपादनम् । प्रमाणत्वाप्रमाणत्वाभ्यामेव तद्भेदस्य सि दित्यत आह ॥ ब्रह्मतर्कं चेति ॥ स प्रभुर्यो मीमांसासूत्रकृदित्यर्थः । एव शब्देन न कण पादादिप्रणीतं तर्कशास्त्रमत्राङ्गतयाऽङ्गीक्रियते; अतो नोक्तदोष इति सूचयति ॥

वा०— ननु ब्रह्मतर्कं चेत्युत्तरवाक्ये सूत्रकृत्प्रणीतत्वेन तर्कशास्त्रस्याङ्गत्वेनोपादानव्युत् युक्तम् । अन्यस्याप्रसक्तेः । प्रसक्तौ वा तस्यापि ग्रहणे बाधकाभावादित्यतस्तत्प्रसक्तिं तद् वक्ष्यमाणनिराकरणानुपपत्तिं निराक्रियमाणस्याप्यङ्गत्वेऽनुपपत्तिं पूर्ववाक्योक्तव्युत्पाद्यभेदे चा दर्शयन्नुत्तरवाक्यमवतारयति ॥ नन्विति ॥ उक्तदूषणपरिहारायैवकारःव्यवच्छेद्यं दर्शयति ॥ ए यदत्राङ्गत्वेन विवक्षितं ब्रह्मतर्काभिधं तर्कशास्त्रं तद्यो ब्रह्ममीमांसासूत्रकृद्भगवान्स एव प्रभुः कृतव ङ्गत्वेन विवक्षितं सूत्रकृदित्युक्त्या यत्सूत्रकृत्कृतं तदेवाङ्गत्वेनात्र विवक्षितमिति सिध्यति । तथा व्यावृत्तिलाभ इति भावः ।

या०— सूत्रे तस्यानुक्तत्वाद्भाष्यादेरसङ्गतार्थत्वादिति भावः ॥ इदंशब्देन परामर्श अयं चासौ शब्दश्चेदंशब्दः । ततश्च सौत्रातःशब्देनेत्यर्थो लभ्यते । तेनातःशब्दस्यैतदो एतदः अश् इत्यादेशे निष्पन्नतया एतच्छब्देन परामर्श इति वक्तव्यम् तत्कथमिदंशब्देनेत्यु शङ्कानवकाश इति ध्येयम् ।

अनु०— पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥
उद्धृत्य पञ्चसाहस्रं कृतवान्बादरायणः ॥

सु०—ननु कथं सूत्रकृता कृतो ब्रह्मतर्क इत्युच्यते । ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना मीरितमिति तस्यान्यकृतत्ववचनात् । न च वाच्यं विष्णुकृतोऽप्येकोस्तु, अयमपर व्यासकृतो ब्रह्मतर्को न स्यादिति; भगवत्कृतस्य तस्याप्रामाण्ये कारणाभावात् । अत्राप्यन प्रसङ्गाच्च । प्रामाण्ये तु व्यर्थं व्यासस्यैकविषये ग्रन्थान्तरनिर्माणमित्यत आह ॥ पञ्चाश

ननु च कथं विस्तारादिति । प्रथने वावशब्द इति प्रतिषेधात् । मैवम् । पञ्चाशद्भिः श्लोकैर्विस्तारः प्रपञ्चो यस्यार्थस्य तस्मात्किञ्चिदर्थमुद्धृत्य पृथक्कृत्य तत्प्रतिपादकं स्राणि परिमाणमस्येति पञ्चसाहस्रं, ग्रन्थं कृतवानिति व्याख्यानात् । यद्यपि व्यासो रन्य इति परिहारोऽत्र वक्तुं शक्यत एव तथाऽपि वस्तुस्थितिज्ञापनाय भगवतो पृथग्ग्रन्थरचने प्रयोजनमभिहितमिति ज्ञातव्यम् । अत एव विष्णुनेत्यस्य विवरणाय तनावित्युक्तम् । तथा च नारायणावतारे विष्णुना कृतादिति योजना ॥ अथवा नञा मनित्यमिति वचनात्पञ्चाशत्कोटि(टचो)विस्तारो यस्य ग्रन्थस्येत्यपि युक्तम् । तथा दिति मुख्यमेव भवति । अन्यथा लाक्षणिकं व्याख्येयमिति ।

वा०— उत्तरवाक्ये व्यासस्य ग्रन्थान्तरनिर्माणप्रयोजनाभिधानात्तद्व्यावर्त्यशङ्का प्रसञ्जयति ॥ नन्विति ॥ प्रथन इति ॥ वावुपपदे शब्दाविषयके कथने वाच्ये स्तृञो घञिति तथाच ऋदोरबित्यपैव भवितव्यमित्याशयः । [ प्रथने वावशब्दे । विपूर्वात्स्तृणातेर्घञ् प्रथने । पटस्य विस्तारः । विस्तारस्तिर्यगायतिः । प्रथने किम् । तृणस्य विस्तरः । अ ग्रन्थविस्तरः । ऋदोरप् । नायं तकारः किन्तु दकारः । करः । गरः । शरः । यवः स्तवः । पवः । निरभ्योः पूल्वोरित्याद्यारम्भादित्याशयेन दीर्घान्तानप्युदाहरति लवः । स्तृञ आच्छादने । स्तृणातिप्वादीनामिति ह्रस्वः शिति । ] ॥ तत्प्रतिपादकमिति ॥ संबन्धितमिति द्रष्टव्यम् ॥ पञ्चसाहस्रमिति ॥ तदस्य परिमाणमित्यण् । अत्र सङ्ख्यायाः सङ्ख्यस्य चेति सूत्रे सङ्ख्यायाः उत्तरस्य संवत्सरपदस्य सङ्ख्यायाश्च ञिति णिति किति प्रत्यः ऽचामादेरचः स्थाने वृद्धिविधानादुत्तरपदवृद्धिरिति द्रष्टव्यम् । [ सङ्ख्यायाः संवत्सरसङ्ख्यः सङ्ख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । द्विसांवत्सरिकः । द्वे षष्टी भृते द्विषाष्टिकः । न्तरस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे काले परिमाणस्याग्रहणार्थम् । तेन द्वैमासिक पदवृद्धिर्न । ] ॥ अत एवेति ॥ वस्तुस्थितिकथनस्य भाष्याभिमतत्वादेवेत्यर्थः । अन्यथा तनावित्यस्य प्रयोजनान्तराभावाद्वैयर्थ्यमेव स्यादिति भावः ।

स०— विष्णुकृतव्यासकृततर्कशास्त्रद्वयमङ्गीक्रियते चेत् विष्णुकृतस्याप्रामाण्यमङ्गीकि उत प्रामाण्यमिति विकल्पौ मनसि निधाय क्रमेण दूषयति ॥ भगवत्कृतस्य तस्येत्यादिना । वावशब्द इति प्रतिषेधादिति ॥ प्रथने गम्यमाने विपूर्वात् स्तृणातेः घञ्प्रत्ययो भवति ।

त्प्रथनं न शब्दविषयं भवतीति प्रतिषेधादित्यर्थः ॥ **अथवा नञा निर्दिष्टमनित्यमिति** ॥ इत्यत्र नञा निर्दिष्टमित्यर्थः ॥ **अत एव विष्णुनेत्यस्येति** ॥ अत एव वस्तुस्थितिज्ञापनार्थमभिहि देवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः । अनेन नारायणस्य विष्ण रत्वकथनेन व्यासस्यापि तत्सूचनाद्यपीत्याद्युक्तं प्रमेयं ज्ञापितं भवतीति ध्येयम् ॥ **लाक्ष व्याख्येयमिति** ॥ कृतादित्येतत्प्रकाशितादिति व्याख्येयमित्यर्थः ॥

**प०—वचनादिति** ॥ द्वितीये गीतातात्पर्योक्तनारदीयवचनादित्यर्थः । एवं वादिनस्त विष्णुकृतं तर्कशास्त्रमप्रमाणमुत प्रमाणमिति विकल्पं हृदि कृत्वा आद्ये आह ॥ **भगवत्कृतस्ये** अन्त्ये आह ॥ **प्रामाण्ये त्विति** ॥ प्रथने वावशब्द इति प्रतिषेधादिति । तृतीयस्य तृतीयपादे ऽयज्ञ इति पूर्वसूत्रात्स्तृञ् आच्छादन इति धातुमनुवृत्त्य वौ विशब्दउपपदे स्तृधातोः घञ्प्रत्ययो भ प्रथने अशब्दे शब्दाविषयविस्तीर्णत्वे गम्यमाने । शब्दविषये गम्यमाने तु घञ्न भवति । रबित्यप्प्रत्यय एव भवतीत्युक्तत्वेन शब्दविषयप्रथने घञ्प्रत्ययप्रतिषेधादित्यर्थः ॥ **वस्तुस्थितिज्ञापना** वस्तुगत्या व्यासकृतब्रह्मतर्कस्यान्यत्वज्ञापनायेत्यर्थः ॥ **प्रयोजनमभिहितमिति** ॥ सङ्क्षेपेणात्र र मित्यनेनेत्यर्थः ॥ **अत एवेति** ॥ वस्तुस्थितिज्ञापनार्थं प्रवृत्तत्वादेवेत्यर्थः । अन्यथा नारायणतना प्रयोजनाभावादिति भावः ॥ **विष्णुनेत्यस्येति** ॥ ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमिति गतस्येत्यर्थः ॥ **नञा निर्दिष्टमिति** ॥ अशब्दे शब्दाविषये, शब्दविषये प्रथने तु नेति निर्दिष्टमित्यर्थः । अनित्यत्वज्ञापकमुक्तं तेनानिष्टमित्येतद्व्याख्यानावसरेऽस्माभिः ॥ **कृतादिति मेवेति** ॥ शब्दनिष्ठस्यैव कृतत्वस्य लाभादिति भावः ॥ **अन्यथेति** ॥ पूर्वव्याख्याने ला शब्दनिष्ठं कृतत्वम् । अर्थे कृतत्वासंभवात्कृतादित्येतत्प्रकाशितादिति व्याख्येयमित्यर्थः । उपलक्षणं किञ्चिदर्थमुद्धृत्य तत्प्रतिपादकमित्यध्याहारकल्पनापि पूर्वव्याख्यान इति लक्षणया व्याख्येयमित्यर्थ

**या०— प्रथने वाविति** ॥ प्रथने गम्यमाने विपूर्वात् स्तृणातेः घञ्प्रत्ययो भवति तच्चे शब्दविषयं न भवतीति शब्दविषयप्रथने घञः प्रतिशेधादित्यर्थः ॥ **वस्तुस्थितिज्ञापनायेति** ॥ गत्या व्यासकृतब्रह्मतर्कस्यान्यत्वज्ञापनायेत्यर्थः ॥ **अत एवेति** ॥ वस्तुस्थितिज्ञापनार्थं प्रवृत्तत्वादेवेत्य अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः ॥**विष्णुनेत्यस्येति**॥ ब्रह्मतर्कस्तर्कशास्त्रं वि यत्समीरितमिति वाक्यगतस्येत्यर्थः ॥ **अन्यथा लाक्षणिकमिति** ॥ अर्थे कृतत्वासंभवात्कृतादित्येत शितादिति व्याख्येयमित्यर्थः । उपलक्षणं चैतत् । किञ्चिदर्थमुद्धृत्य तत्प्रतिपादकमित्यध्याहारकल्प पूर्वव्याख्यान इति ज्ञेयम् ॥

श्री०— अन्यकृतत्वेऽपि व्यासभिन्नविष्णुकृतत्ववचनादित्यर्थः । विष्णुकृतब्रह्मतर्कभिन्नस्य ब्रह्म व्यासकृतत्वे किं विष्णुकृतस्य ब्रह्मतर्कस्याप्रामाण्यं विवक्षितं प्रामाण्यं वा । आद्ये आह ॥**भगवत्कृत**ः विष्णुकृतस्य ब्रह्मतर्कस्येत्यर्थः । अत्रापि व्यासकृतब्रह्मतर्केऽपि । उभयोरपि भगवत्कृतत्वेन तत्त्व विशेषादस्याप्यप्रामाण्यं स्यादिति भावः । द्वितीये त्वाह ॥ **प्रामाण्ये त्विति** ॥ विष्णुकृतब्रह्मतर्के माने सति वेदप्रामाण्यादिरूपैकप्रमेयविषय एव । पुनर्व्यासस्य ग्रन्थान्तरनिर्माणं व्यर्थमित्यर्थः ॥ **इति** ॥ तथाच विपूर्वकात् स्तृधातोरशब्दे प्रथने शब्दविषयप्रथनाविवक्षायामर्थविषयकप्रथनि यामिति यावत् । घञ्प्रत्यये घकारञकारयोर्लोपे अकारमात्रे उर्वरिते सति विस्तृ अ इति स्थिते स्याचोञ्णितीति ञित्वादिवृद्धौ विस्तार्+अ=विस्तारेति रूपम् । तत्र शब्दविषयप्रथनविवक्षायां प्रतिषेधेन तत्प्रयुक्तवृद्ध्यप्राप्तौ विस्तरादित्येव स्यान्न तु विस्तारादितीति भावः । अत्र शब्दविष न विवक्षितं किं त्वर्थविषयकमेवातो घञि वृद्धौ विस्तारादिति युक्तमित्याशयेन विग्रहं दर्श **पञ्चाशद्भिरिति** ॥ यथोक्तममरकोशे । विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर इति ॥ प **इति** ॥ ननु कथं सूत्रकृता कृतो ब्रह्मतर्क इत्युच्यते 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमि'त्यन्य वचनादिति शङ्काया इति शेषः ॥ **नारायणावतार इति** ॥ विष्णुना मूलरूपिणा नरनारायण कृतादित्यर्थः ॥ **नञा निर्दिष्टमिति** । अशब्द इति नञा निर्दिष्टस्यानित्यत्वेन शब्दविषयप्रथनि यामपि घञ्प्रत्यये विस्तारादिति युक्तमित्यर्थः ।

च०— **प्रथने वाविति** ॥ शब्दाविषयके प्रथने गम्यमाने विपूर्वात् स्तृणातेर्घञ् सूत्रार्थः ॥

अनु०— अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥

**सु०— शङ्काद्वयपरिहारमुपसंहरति ॥ अत इति ॥ यतोऽयमर्थो ब्रह्मतर्कोक्तो ब्रह्म मीमांसाङ्गमतस्तदर्थं प्रकृतत्वादत इत्यभ्यसूचयदिति युज्यत इत्याद्यशङ्कापरिहारस्योपसंह यतस्तर्कमीमांसाशास्त्रयोर्भेदः स च व्युत्पाद्यभेदाधीनोऽतस्तदर्थं तर्कशास्त्रव्युत्पाद्यमेतम इति सङ्क्षेपादेवाभ्यसूचयन्न विस्तरेणेति द्वितीयशङ्कापरिहारस्येति ।**

वा०— शङ्काद्वयपरिहारोपसंहारत्वोपपत्तये त इति तत्तद्योग्यपरामर्शविषयोपदर्शकयच्छब्द वाक्यमध्याहृत्य निष्कृष्टहेतुस्वरूपं दर्शयन्नेव वाक्यं योजयति ॥ **यतोऽयमर्थ इत्यादिना** ॥ सङ्क्षे

ादेवावधारणलाभमभिप्रेत्य तद्व्यावर्त्यं दर्शयति ॥ **नेति** ॥ ननु प्रकृतत्वोपपादनाय ग्रन्थोक्तत्वे
ुभवसिद्धत्वोक्तिरसङ्गतेत्यत आह ॥ **वक्त्रिति** ॥ अत्रात इति परामर्शविषयस्य यतोऽनुभवतः
। मूल एव दर्शितत्वाच्छङ्काद्वयपरिहारोपयुक्तनिष्कृष्टहेतुस्वरूपमात्रप्रदर्शनम् । **प्रकृतत्वादिति**
देति ।

प०— **शङ्काद्वयेति** ॥ एतत्सर्वमित्यादिग्रन्थावतारिकायां कृतं यच्छशङ्काद्वयं तस्य यः
एतत्सर्वं तर्कशास्त्र इत्यादिना कृतः तमुपसंहरतीत्यर्थः ।

श्री०— **शङ्काद्वयमिति** ॥ अप्रकृतत्वविस्तराकरणरूपं शङ्काद्वयमित्यर्थः ॥

अनु०— **यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपि च ॥**

सु०— **प्रकारान्तरेण शङ्काद्वयं परिहरति ॥ यत इति ॥ वक्तृश्रोतृबुद्धौ परिवर्तमानं**
ात्प्रकृतमित्युच्यते । ग्रन्थोक्तत्वं तु तल्लिङ्गतयैव तथा । एतच्च सर्वं प्रपञ्चसत्यत्वादिकं
भवत एव सिद्धमतोऽपि प्रकृतत्वादत इति परामृश्य हेतुत्वेन कथनं युज्यत इति । यत
सत्यत्वादिकमनुभवसिद्धं सर्वेषामतोऽतिस्फुटत्वादप्यत इति संक्षेपादेवाभ्यसूचयत्
रेणेति ।

श्री०— **तल्लिङ्गतयेति** ॥ बुद्धिप्रकृतत्वज्ञापकतयेत्यर्थः ।

अनु०— **दैवैश्च दुर्गमार्थेषु व्यापृतो नातिविस्तृतिम् ॥**
**चकार**

सु०— **एवं शङ्काद्वयं प्रकारद्वयेन परिहृत्य द्वितीयशङ्कां प्रकारान्तरेणापि परिहरति ॥**
॥ सुगमज्ञानानन्तरं दुर्गमज्ञानं प्राणिनां सुकरमिति सुगमप्रमाणादिस्वरूपं ब्रह्मत-
व्युत्पाद्येदानीं दैवैर्निमित्तैस्तत्प्रार्थनयेति यावत् । दुर्गमार्थेषु वेदेषु तदर्थमीमांसायां
: प्रवृत्तो यतो भगवान्व्यासोऽतश्चानवसरतयाऽस्य प्रमेयस्य नातिविस्तृतिं चकार ।
:(तइत्य)भ्यसूचयदिति प्रकृतेऽपि पुनर्नातिविस्तृतिं चकारेति साध्याभिधानं प्रकृतत्वो-
निरासार्थम् । अन्यथा साध्यद्वयस्यापि प्रकृतत्वात्तदर्थमप्येतद्वाक्ययोजनायां शिष्याणां
ः स्यादिति । पूर्वं तु शास्त्रभेदसिद्धये विस्तरो न कृत इत्युक्तम् इदानीं त्वप्रस-
देति भेदः ।

वा०— अत्र दुर्गमार्थेषु व्यापृत इत्युक्त्या प्रमाणादिस्वरूपं सुगमत्वादनवसराच्च स
प्रतिपादितवानिति प्रतीयते । तथा च पूर्वोक्तविरोधो ब्रह्मतर्के विस्तरेण प्रमाणादिप्रतिपादनप्रति
प्रमाणान्तरविरोधश्च । अतः सुगमं ब्रह्मतर्कादौ प्रमाणादिस्वरूपं विस्तरेण प्रतिपाद्येदानीं दु
व्यापृत इति व्याख्येयमित्यभिप्रेत्य सुगमस्यादौ व्युत्पादने निमित्तं दर्शयन्वाक्यं योजयति ॥ सुग
देवप्रेष्यत्वशङ्कां व्यावर्तयितुं देवैरिति व्यापृत इति च व्याख्याति ॥ **देवैरित्यादिना** ॥ दुर्गम
प्रवृत्तिर्न ब्रह्ममीमांसायां विस्तरेण प्रमाणादिस्वरूपानिरूपणे निमित्तमित्यतस्तच्छब्देनात्र मीमां
'प्रतेत्याह ॥ **तदर्थेति** ॥ ननु देवप्रार्थनया दुर्गमार्थमीमांसाव्यापृतत्वोक्त्या न कोऽपि विस
हेतुरुक्तः । न चानवसरत्वोक्तिरिति वाच्यम् । प्रमाणादिस्वरूपस्यापि मीमांसाप्रमेयोपपादनोप
प्रतिबन्धकत्वाभावात् । प्रतिपाद्यभेदसिद्ध्यर्थत्वोक्त्याऽप्यर्थादनवसरत्वस्यैव लाभाच्च । न च पूर्वो
वेत्र तात्पर्यमिति वाच्यम् । पौनरुक्त्यापत्तेरित्यत आह ॥ **पूर्वं त्विति** ॥ तथा च विर
प्रमाणादिप्रतिपादने पूर्वं शास्त्रभेदासिद्धिरुक्ता । इदानीं तु श्रोतृप्रयोजनोद्देशविरोध इति स्
भेदः । अत्राप्रसक्तत्वं देवैर्व्यापृत इत्यनेन सूचितमिति द्रष्टव्यम् ।

स०—**प्रकृतत्वोपपादननिरासार्थमिति** ॥ पूर्ववत्प्रकृतत्वस्यापि उपपादनमत्र क्रियत
शङ्कानिरासार्थमित्यर्थः । ननु प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रत इत्यादिना अस्य मीमांस
प्रयत्नपरत्वेन यदि प्रमेयपरेऽपि प्रमाणं स्वरूपं विस्तरेण प्रतिपाद्येत तर्हि भेदो न स्यात् । अत
सङ्क्षेपेणोक्तमित्युक्तम् । इदानीमपि देवैश्च दुर्गमार्थेष्वित्यर्थपरत्वेनैव भेदस्योच्यमानत्वेन पौनरुक्त्य
आह ॥ **पूर्वन्त्विति** ॥ नात्रार्थेष्वित्यत्र भारः किन्तु व्यापृत इत्यत्रैव भारः ।

प०— **प्रकृतत्वोपपादननिरासार्थमिति** ॥ अप्रकृतपरामर्शित्वं कथमतःशब्दस्येति प्रथग
निरासार्थमतःपदपरामृश्यमानस्य प्रकृतत्वं प्रतिपादयितुं यतोऽनुभवतः सिद्धमित्यादिग्रन्थो यथा
तथाऽयमपीति भ्रमनिरासार्थमेव प्रवृत्तमिति दर्शयितुमित्यर्थः ॥ **साध्यद्वयस्यापीति** ॥ अतःपदप
विषयस्य प्रकृतत्वं सङ्क्षेपेणार्थकथनं चेत्येवंरूपसाध्यद्वयस्यापीत्यर्थः ॥ **पूर्वं त्विति** ॥ एतत्सर्वं त
इत्यादौ ॥ **अप्रसक्तत्वादिति** ॥ प्रसङ्गानुकूल्यविरहादित्यर्थः ।

या०—**अप्रसक्तत्वादिति** ॥ प्रसङ्गानुकूल्यविरहादित्यर्थः ।

श्री०— **प्रकृतत्वोपपादनेति** ॥ अप्रकृतत्वात्कथमुक्तार्थजातस्यातःशब्देन परामर्श
शङ्कापरिहाराय यत्प्रकृतत्वोपपादनं तन्निरासार्थमित्यर्थः । अन्यथा पुनः साध्यानभिधाने ॥ **साध
स्यापीति** ॥ प्रकृतत्वोपपादनातिविस्तराकरणरूपसाध्यद्वयस्यापीत्यर्थः ॥ **तदर्थमपीति** ॥ सङ्क्
सूचने निमित्तोपपादनवत्प्रकृतत्वोपपादनायामपीत्यर्थः ।

अनु० — एता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः ।

सु० — विस्तराकरणे कारणान्तरमप्याह ॥ एता इति ॥ यस्मादेताः प्रतिपक्षगा बन्ध
थ्यात्वादौ प्रतिवादिनोपन्यस्ता युक्तयोऽवज्ञेयाः । निर्दलत्वात् । अतोऽपि सूत्रकारस्तन्निरा
णे नातिविस्तृतिं चकार । किन्तु हेयताज्ञापनाय संक्षेपं चक्रे । अस्माभिस्तु तामेव निर्दलता
यितुं किञ्चित्प्रपञ्चितमिति भावः ।

वा० — यदि वस्तुतः प्रतिपक्षगतत्वं तर्हि नावज्ञेयमित्यतः प्रतिवादिनोपन्यस्तयुक्तय इत्युक्तम्
ऽपीत्यादिना चशब्दस्य नातिविस्तृतिं चकारेत्यस्य चानुवृत्तिं च सूचयति । तर्हि सङ्क्षेपेण
ासोऽपि न कर्तव्य इत्याशङ्कते ॥ किन्त्विति ॥ तर्हि भाष्यकारेणापि न विस्तरतो निरस्य
यताज्ञापनापत्त्या सूत्रकारविरुद्धाचरणापत्तेरित्यतो भाष्यकाराभिप्रायमाह ॥ अस्माभिस्त्विति ॥

स० — प्रपञ्चनं(प्रवचनं ?) पौनरुक्त्यमिति भावः ॥

श्री० — ननु तर्हि बन्धमिथ्यात्वं नैव मुक्तिरपेक्षित इत्यादिना बन्धमिथ्यात्वनिराकरणं
ङ्क्षेः कस्मात्प्रपञ्चेन कृतमित्यत आह ॥ अस्माभिस्त्विति ॥ तामेवेति ॥ सूत्रकाराभिप्रेतामेवेत्यर्थः

अनु० — प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते ॥
तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः ॥

सु० — नन्वस्त्ववैदिकैर्बौद्धादिभिरुत्प्रेक्षितानां युक्तीनामवज्ञेयत्वं वैदिकैरुक्तास्तु नाव
र्हन्ति समूलत्वेन सदलत्वात् । अतः कथमेतदित्यत आह ॥ प्रत्यक्षेति ॥ प्रत्यक्षशब्देन
प्रतीत्युपलक्षणम् । प्रत्यक्षा च सेक्षा च स्पष्टा प्रतीतिस्तस्यामप्यक्षमः । स्पष्टं हि प्रतीयते
ग्रादिसत्यत्वादिकं तदपि यो द्रष्टुं न शक्नोति । सोऽत्र मीमांसाविषये कमेव पक्षं प्रति
मभिवीक्षते । उत्प्रेक्षते । न कमपि । तस्मादक्षमपक्षत्वान्मोक्षशास्त्रे वेदे प्रवृत्तोऽप्याग्रहात
क्षित एव सूत्रकृता न तु विस्तरेण निराकृत इति ।

वा० —मोक्षशास्त्र इत्यनेन वेदे प्रवृत्त्युक्त्या सूचितां शङ्कां निरसितुमुत्तरवाक्यमवतारयति
न्विति ॥ ननु प्रत्यक्षेक्षाक्षमत्वोक्तिरयुक्ताऽतःशब्दार्थतयोक्तयुक्तिजातस्य सर्वस्यापि प्रत्यक्षप्रतीतिमात्र
यत्वाभावादित्यत आह ॥ प्रत्यक्षशब्देनेति ॥ अत्र प्रत्यक्षशब्दः स्पष्टतापरः । ईक्षाशब्दश्च

ीतिपर इति भावः । तस्यामपीत्यनेन सूचितं कैमुत्यं प्रकृतानुगुणतयोपपादयति ॥ **स्पष्टं हीति** त्रेत्यस्य संबन्धसत्यत्वादिविषयत्वेऽनन्वयप्रसङ्गादाह ॥ **अत्रेति** ॥ अभिवीक्षत इत्यस्य प्रत्यक्षप्रतं र्थकत्वे कैमुत्यानुपपत्तेरतीन्द्रिये तदनुपपत्तेश्चाह ॥ **अभिवीक्षते उत्प्रेक्षत इति** ॥ मोक्षशा स्त्रस्य मीमांसाविषयकत्वे पूर्वपक्ष्युक्तवैदिकत्वस्य गतिर्नोक्ता स्यात् मोक्षशास्त्र इत्युक्तेर्वैयर्थ्यं चेत्य कृतोपयोगितया प्रवृत्तोऽप्याग्रहादित्यध्याहरन्नेव वेदविषयकतया मोक्षशास्त्र इत्येतद्व्याख्याति ॥ **वे यादिना** ॥

स० — लौकिकप्रवेदनीये साक्षात्स्वावच्छिन्नप्रतीतिनियमादाह ॥ **प्रत्यक्षशब्देन स्पष्टप्रतं पलक्षणमिति** ॥ प्रतीतिमात्रोपलक्षणमित्यर्थः । दंष्ट्र्युपघातकत्ववत् स्पष्टत्वमेव शक्यसंबन्ध इ रणम् ॥ **स्पष्टेति** ॥ स्पष्टसामान्यमेव त्वक्ष्यं; प्रतीतिः तु अक्षशब्दसमभिव्याहारादिति ज्ञेयम् ।

प० — प्रत्यक्षपदेन तन्मात्रोपादानं वारयति ॥ **स्पष्टप्रतीत्युपलक्षणमिति** ॥ **प्रवृत्तोऽप्य ादिति** ॥ आग्रहात्प्रवृत्तोऽपीत्यन्वय इत्येके । उत्तरेणान्वय इत्यन्ये ॥ ॥ अतःशब्दस्यानेकाश ामर्शित्वसमर्थनम् ॥ ॥

या० — सर्वस्य प्रपञ्चस्य प्रत्यक्षत्वाभावादाह ॥ **प्रत्यक्षशब्देनेति** ॥ प्रत्यक्षेक्षाशब्दे यर्थः । तथा च प्रत्यक्षशब्देन स्पष्टत्वमीक्षा शब्देन च प्रतीतिमात्रमुपलक्ष्यत इति ज्ञेयम् । अ ाह ॥ **प्रत्यक्षा च सेत्यादि** ॥ **तस्यामप्यक्षम इति** ॥ तादृशप्रतीतिरूपक्रियाकर्ता नेत्यर्थः देव दर्शयति ॥ **स्पष्टं हीत्यादिना** ॥ स्वर्गमात्रपर्यवसितमिति मीमांसककटाक्षेणोक्तम् । तन्मतस्या मतःशब्देन निराकृतत्वात् । वस्तुतस्तु तमित्यनेन वेदैकदेशकर्मकाण्डपरामर्शेन मायावाद्यप्यत्र विव त इत्यवधेयम् ॥

श्री० — **समूलत्वेनेति** । वेदमूलकत्वेनेत्यर्थः ॥

सु० — इदमुक्तं भवति । यो हि लौकिकप्रवेदनीयमप्यर्थं न जानाति तस्या लौकिका ऽधिकार एव नास्ति । तथाऽपि तत्र वैयात्यात्प्रवृत्तोऽवज्ञामेवार्हति न तु प्रतिपक्षिभावमिति क्षशास्त्र इत्यनेनापि तस्य वेदविचारानधिकारं सूचयति । वेदो हि मोक्षशास्त्रमिति प्रसिद्धः प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एवेति श्रुतेः । तं च स्वर्गमात्रपर्यवसि न्कथमत्राधिक्रियते । न हि तत्प्राप्यमविद्वांस्तेन च पथा प्रतिष्ठमानो नोन्मत्त इति स श्रम् ।

तदनेनातःशब्दो हेत्वर्थ इति भाष्यं स्पष्टीकृतं भव(ती)ति ।

वा॰— ननु स्पष्टप्रतीतबन्धसत्यत्वाद्यज्ञानेऽपि वैदिकोक्तयुक्तीनां नावज्ञेयमित्यस्य किमाय। न च वैदिकत्वमेवासिद्धमित्यभिप्रेतम् । वेदप्रवृत्त्यैव तत्सिद्धेः । न च वेदानधिकारोऽत्राभिप्रे नियामकाभावात् । वेदप्रवृत्त्यन्यथाऽनुपपत्त्यैव तत्सिद्धेश्च । यथाकथञ्चित्प्रवृत्तस्यावज्ञेयत्वानुपपत्तेश्च मूलाभिप्रायमाह ॥ **इदमुक्तं भवतीति** ॥ ननु स्पष्टत्वाय वेद इत्येव वक्तव्ये मोक्षशास्त्र इत प्रयोजनविशेषं पश्याम इत्यतस्तत्प्रयोजनं दर्शयति ॥ **मोक्षशास्त्र इत्यनेनापीति** ॥ **तं चेति** ॥ वेदान्तानां मोक्षपरत्वेऽपि कर्मकाण्डस्य स्वर्गमात्रपर्यवसितत्वं वदन्मायी न स्वर्गादेः फलान्तः सर्वस्यापि वेदस्य स्वर्गमात्रपर्यवसितत्वं वदन्मीमांसकोऽपि वेदानधिकार्येवेति सूचितं भवति ॥ **तदनेने** ज्ञानी प्रियतमोऽतो म इत्यारभ्यैतत्पर्यन्तेनेत्यर्थः ।

श्री॰— **तं च स्वर्गमात्रेति** ॥ मोक्षोद्देशेन भगवत्प्रतिपादनपराणां सर्ववेदानां मध्ये काण्डं स्वर्गमात्रपर्यवसितं वदन्नित्यर्थः ॥ **तत्प्राप्यमिति** ॥ वेदप्रतिपाद्यं तत्प्रयोजनं चाविद्वानित्यर्थ **तेन च पथेति** ॥ वेदरूपमार्गेणेत्यर्थः । आत्मनो वैदिकत्वं वदन्निति यावत् । संहता मिलित **ताश्चेति** ॥ शच्याद्या इत्यर्थः । सम्यग्विधप्रकारेण । एधि अस्तीत्यर्थः । एधीति अस् भुवीति रूपम् ।

अनु॰— स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् ॥
स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥
आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ॥
मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ॥
अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥

सु॰— एवमतःशब्दव्याख्यानमुपपाद्य स्वयं भगवतेत्यादिना क्रमप्राप्तं ब्रह्मश समर्थयते ।

जिज्ञास्योऽयं विधीयत इति ब्रह्मशब्दो विष्णुविषयो व्याख्यातः । तदनुपपन्न ब्रह्मशब्दस्य जातिजीवकमलासनशब्दराशिषु वृद्धप्रयोगादिसिद्धत्वात् । ननु भगव ब्रह्मशब्दो वृद्धप्रयोगादिसिद्धः । तथाऽप्यनेकार्थेषु शक्तियुक्तस्य विवक्षाज्ञापकप्रमाणाभ भगवत्परत्वावधारणायोगादित्याशङ्क्य यथाऽनेकार्थोऽपि गोशब्दः प्रकरणवशादर्थविशेषपरं

धार्यते तथाऽनेकार्थोऽपि ब्रह्मशब्दः सूत्रकृता विष्णुविषय एव प्रयुक्त इति प्रकर
ज्ज्ञायत इति परिहारं विवक्षुर्ब्रह्मशब्दस्य विष्णौ प्रकृतत्वं तावदाह ॥ स्वयमिति ॥

नन्वथातो ब्रह्मजिज्ञासेत्येतदेवादिसूत्रम् । अस्मादपि पूर्वसूत्रस्य विद्यमानत्वे
(त्वेन)व्याख्यानप्रसङ्गात् । अन्यथा प्रथमातिक्रमे कारणाभावादकुशलाः सर्व एव व्याख्
प्रसज्जेरन् । तत्कथमस्मात्सूत्रात्पुरा विष्णुर्ब्रह्मेत्येतत्स्वयं भगवता सूत्रकृतोदितमित्युच्यत
तत्राह ॥ स विष्णुरिति ॥ तेनेति भगवतेत्यनेन संबध्यते । येनेदं शास्त्रं कृतं तेनैवेत
सत्यमेतदेव ब्रह्ममीमांसाशास्त्रस्यादिसूत्रम् । किन्तु दैवीमीमांसाशास्त्रस्यान्ते 'स विष्णुरा
तं ब्रह्मत्याचक्षते' इतिसूत्रद्वयेन विष्णुः ब्रह्मेत्युदितम् । तदनन्तरमेव चाथातो ब्रह्मजि
सूत्रितत्वात्पुरोदितमिति युज्यत इति । ये तु देवमीमांसाशास्त्रस्वरूपे तदनन्तरमेतत्सूत्र
विप्रतिपद्यन्ते तेषां पुराणादिप्रसिद्धिविरोधं हिशब्देन दर्शयति ।

ननु देवतामीमांसाशास्त्रं शेषपैलाभ्यां कृतमिति पुराणादौ प्रसिद्धं तत्कथमुच्यते
तोदितमिति तत्राह ॥ आद्यन्तमिति ॥ अथातो दैवीत्यादिरुदाहृतोन्तश्चाद्यन्तम् । यतस्त
कृतमतोऽञ्जसैव कृतमित्यनेनानेककर्तृकत्वान्न कन्थायितत्वमस्य शङ्कनीयमित्याह । अ
विशेषो विशेषवाक्यादिभिरवगन्तव्य इति ।

अस्त्वेवं ब्रह्मशब्दस्य विष्णुविषयतया प्रकृतत्वं ततः किमित्यत आह ॥ अत
यतो देवतामीमांसाऽन्तिमसूत्रद्वयं भगवता कृतम् । अतस्तत्रैव सूत्रद्वये ब्रह्मशब्दार्थस्य
त्वसिद्धेर्विष्णुतायाः प्रकृतत्वात् अथातो ब्रह्मजिज्ञासेत्यत्रापि ब्रह्मेति विष्णुमेवासूचयत्स
इति ज्ञायते । अतो जिज्ञास्योऽयं विधीयत इत्युचितमेव व्याख्यानमिति ।

वा०— ननु ब्रह्मशब्दस्य विष्णुविषयताया अनुक्तत्वेन धर्मिण एव बुद्ध्यनारोहात्तस्य
वक्तव्यत्वे प्रथमत एव समर्थनमयुक्तम् । अनुपपत्त्यभावाच्च । ब्रह्मशब्दस्य विष्णुविषयतायाः प्र
पपादनं चायुक्तम् । अतःशब्दस्येव ब्रह्मशब्दस्य प्रकृतपरामर्शकत्वाभावादित्यतोऽतस्तत्रैव विष्णुत्व
र्विष्णुमेव ब्रह्मेत्यसूचयदित्यनेन सूचितमनुपपत्तिप्रकारं दर्शयन्नेवोक्तबाधकानि परिहरति । ब्रह्मशब्द
भगवदुदितत्वं न सूत्रकारीयब्रह्मशब्देन परामर्शप्रयोजकमित्यतो भगवतेति व्याख्यातं सूत्रकृतं
अत एव तेनेत्यपि तथैव व्याख्याति ॥ येनेति ॥ उदाहृतसूत्रमात्रस्य विवक्षितार्थासाधकत्वादर्थत
दितद्वितीयं सूत्रमुदाहरति । हिशब्दस्य हेतुपरत्वायोगाल्लोकप्रसिद्धेश्चाभावादाह ॥ ये त्विति ॥ अ
भगवता कृतं मध्यं शेषपैलाभ्यां कृतमित्येतावतैवोक्तशङ्कापरिहारात्तदाज्ञयाऽञ्जसैवेत्यस्य वैयर्थ्यं प

योजनमाह ॥ **यत इति** ॥ विशेषवाक्यादिभिरित्यत्रादिपदेन तदानीन्तनप्रत्यक्षैतिह्ययोः संग्रहः।
ाब्दस्य विष्णुवाचकतायाः परेणाप्यङ्गीकृतत्वात्प्रकृतोपयुक्तमर्थमाह ॥ **विष्णुताया इति** ॥ उक्त-
।परिहारत्वज्ञापनाय विष्णुमित्यध्याहृत्यैवकारस्य तेनाप्यन्वयं प्रदर्शयति ॥ **विष्णुमेवेति** ॥

**प०— एवमिति** ॥ एतत्सर्वं तर्कशास्त्र इत्याद्युक्तप्रकारेणेत्यर्थः ॥ **प्रकृतत्वमिति** ॥
णप्राप्तत्वं तावदाहेत्यर्थः ॥ **उदाहृतोऽन्तश्चेति** ॥ स विष्णुराह हीत्यन्तश्चेत्यर्थः । अयं च विशेष
। उक्तदिशाऽनेककर्तृकत्वविशेष इत्यर्थः । न पुनरेकस्मिन्नेव वाक्य इति प्रयोज्यत्वमित्यनुषङ्गः ॥

**अनु०— दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ॥**
**गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः ॥**

**सु०— एवं मीमांसाशास्त्रसंप्रदायज्ञान्प्रति सौत्रब्रह्मशब्दस्य विष्णुपरत्वे युक्तिमभिधाय**
**ना मन्दान्प्रति ब्रह्मशब्दस्य निरुच्यमाननारायणशब्दसमानार्थताप्रतीतिमप्यत्र युक्तिं विवक्षु-**
**यणशब्दं तावन्निर्वक्ति ॥ दोषेति ॥ अत्र छिद्रशब्दोपपादानं दृष्टान्तत्वेन । पर्यायत्वं पर्यायेण**
**ा प्रयोज्यत्वं न पुनरेकस्मिन्नेव वाक्य इत्यर्थः । यथोक्तं 'पर्यायेणैव ते यस्माद्वदन्त्यर्थान्न**
**ाः । पर्यायत्वं ततस्सर्वपर्यायाणां प्रतिष्ठितमि'ति । तेनैकार्थत्वमिति सिध्यति ।**
**र्थत्वे हि पर्यायत्वं स्यात् । एतच्चाभिधानप्रयोगाभ्यामभ्युपेयम् ।**
**यतो दोषार शब्दयोः पर्यायत्वम् । यतश्च नञ् तद्विरुद्धार्थवाची । ततो नारा इति**
**दोषविरुद्धा गुणाः प्रोक्ता इत्यर्थः । तद्वान्नारायण इत्यनेन नाराणामयनमिति विग्रहं**
**ाति । अत्र गुणविशेषानुक्तेः सर्वगुणपरिपूर्णत्वं नारायणशब्दार्थ इत्युक्तं भवति ॥**

**वा०—** ननु तथाऽपि देवमीमांसाशास्त्रस्य कर्ममीमांसावच्छास्त्रान्तरत्वात्तत्प्रकृतत्वस्य नात्रो-
ात्वमित्यतः सकलवेदमुख्यामुख्यार्थप्रतिपादानोपयोगिसकलवेदविचारात्मकत्वमेतन्मीमांसाया एव ।
च परममुख्यार्थब्रह्मस्वरूपप्रतिपादनेऽभिनिविष्टायां यथा विस्तरेण ब्रह्मस्वरूपप्रतिपादनं न तथा
वताप्रतिपादनं किन्तु सङ्क्षेपेणैवेति वेदैकदेशामुख्यार्थकर्मदेवतास्वरूपयोरत्र सङ्क्षिप्य प्रतिपादि-
स्तिरेण प्रतिपादकत्वादेव देवकर्ममीमांसयोः शास्त्रान्तरत्वम् । देवमीमांसाया भगवत्कृतत्वं चाधिक-
ब्रह्मतर्कादिवत्तस्या अङ्गत्वानपायात्तत्प्रकृतस्यात्र परामर्शो युक्त इति मीमांसाशास्त्रसंप्रदायज्ञा-
क्रयुक्तेरप्रत्यूहत्वमेव । मीमांसात्रयमपि प्रत्येकप्रमेयप्रतिपादकं न पुनरुक्तरीत्याऽङ्गाङ्गिभावोपपन्न-

मित्याग्रहवतो मन्दान्प्रत्युक्तयुक्तेर्वक्तुमशक्यत्वेऽपि युक्त्यन्तरमेव भविष्यतीत्याशयेन मन्दान्प्रति न्तरप्रतिपादनाय प्रवृत्तमुत्तरमूलंत दाशयमुद्घाटयन्नवतारयति ॥ **एवमिति** ॥ पूर्वं कर्ममीमांसोक्ता नोक्तिस्तु तद्भाष्यादौ प्रामाण्यादिप्रतिपादनपरतयाऽऽद्याध्यायत्व्याख्यानमसङ्गतमिति तद्भाष्य स्याभिप्रायेणेति द्रष्टव्यम् । नन्वस्तु पर्यायत्वं तावताऽपि न समानार्थकतासिद्धिरित्यत आह ॥ तं भिन्नार्थत्वे वाक्यभेदेनैव नियतप्रयोगो न स्यादिति भावः ।

नञोऽभावार्थत्वस्यापि संभवाद्भाष्योक्तहेतुमात्रस्य गुणा नारा इति साध्यसाधकत्वासंभ न्यूनांशं पूरयति ॥ **यतश्चेति** ॥ ननु तथाऽपि न ब्रह्मशब्दसमानार्थत्वं तस्य गुणपूर्त्यभिध वक्ष्यमाणत्वादित्यत आह ॥ **अत्रेति** ॥

**सु० — ननु नञ्समासे नलोपो नञ इति प्राप्नोति । न । नभ्राडित्य(ा वक्तव्यत्वात् ॥ अथवाऽमानोनाः प्रतिषेध इति गणपठितनसमासोऽयमित्यदं पूर्वपदात्संज्ञायामग इति णत्वम् ॥ ल्युटष्टित्करणसामर्थ्यादयनशब्दोऽत्राधिकरणे त्रिलि पुल्लिङ्गत्वोपपत्तिः ।**

**वा० — नन्विति** ॥ तथा च तस्मान्नुडचीति नुटि अनरायण इति स्यादिति अस्याप्यभियुक्तप्रयोगत्वेनोपसङ्ख्येयत्वमित्याह ॥ **नभ्राडित्यादिष्विति** ॥ ननु स्त्रैणार्थं स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति विहितस्य नञो नलोपाभावार्थं नलोपो नञ इति सूत्रे रा विभाषेत्यतोऽनुवृत्तविभाषाया व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन नारायण इत्यत्र त नलोपभावसिद्धेरुपसङ्ख्यानकल्पनं न युक्तमिति चेन्न । प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वा ञित्वस्याचरितार्थत्वान्नञ्ग्रहणेन सूत्रे प्रत्ययप्रसक्तेरेवाभावात्पूर्वपदत्वेन नञ्विशेषणाद्वा नञः पूर्व भावादेव स्त्रैणार्थ इत्यत्र नलोपाप्रसक्तिरिति पदमञ्जर्यामुक्तत्वेन स्त्रैणार्थ इत्यस्यान्यथासिद्धतया ग्रहणानुवृत्तेरभावेन तथा समाधानस्याशक्यत्वात् । चन्द्रिकायां तदङ्गीकारस्तु किं तद्गुणदोष न्यासस्यापि वृत्तिव्याख्यानत्वात्तदुक्तरीत्याऽप्यस्मदभिलषितसिद्धिरित्यभिप्रत्येति द्रष्टव्यम् ॥ निर्वच णापि नारायणशब्दाभियुक्तप्रयोगोपपत्तेर्नोपसङ्ख्यानकल्पना युक्तेत्यतः पक्षान्तरमाह ॥ **अथ पूर्वपदादिति** ॥ पूर्वपदस्थान्निमित्तादगकारादुत्तरस्य णत्वमिति सूत्रार्थः ।

ननु यदनान्तमकर्तरीति कर्तृव्यतिरिक्तकारके यदनप्रत्ययान्तं तत्तृतीये नपुंसकमिति लिङ्गानु सूत्रेऽनप्रत्ययान्तस्य नपुंसकताया नियमितत्वात्साध्यतेऽनेनेति साधनमधिक्रियते अस्मिन्नित्यधिकरण

दिशब्दानां नित्यनपुंसकताया एवोपलम्भादत्रायनशब्दस्याधिकरणसाधनत्वेऽपि नपुंसकतैव युक्ता । न
ाधिकरणयोश्चेत्यत्र नपुंसके भावे क्त इत्यतो भावग्रहणाननुवृत्त्या सन्नियोगशिष्टानां सह वा प्रवृत्तिः
निवृत्तिरिति परिभाषया नपुंसक इत्यंशस्यापि निवृत्तेर्विशेष्यनिघ्नतया लिङ्गत्रयेऽपि करणाधिकरणादौ
ासनसंभवान्न नपुंसकत्वनियम इति वाच्यम् । तथात्वे साधनादिशब्दानां नियतलिङ्गत्वाभाव-
( । यदनान्तमकर्तरीत्यस्य विशेषविषयकत्वाच्च परिभाषाया अनित्यतामाश्रित्य करणाधिकरण-
त्र नपुंसकानुवृत्तेरावश्यकत्वात् । तथा च नारायण इति पुलिङ्गानुपपत्तिरित्यत आह
ट्टित्करणसामर्थ्यादिति ॥ न च सामर्थ्याश्रयणं निर्बीजमिति वाच्यम् । आस्थानमास्थानी करणं
माणं प्रमाणो राजधानं राजधानीत्यभियुक्तप्रयोगाणामेव तत्र बीजत्वात् । अत एव टिड्ढाणञ्द्वय
त्रे लटो द्व्यनुबन्धकत्वाट्टिद्ग्रहणेन ग्रहणे निरस्ते तर्हि तत एव ल्युटोऽप्यग्रहणं प्रसज्येतेत्याशङ्किते
स्य टेरेत्वेन चरितार्थत्वात् ल्युटष्टित्त्वस्याचरितार्थत्वात् तद्ग्रहणे टित्त्ववैयर्थ्यापत्त्या ङीबर्थमेव
मित्युक्तत्वेन टित्करणसामर्थ्यमाश्रितम् । इदं च बाहुलकमनाश्रित्य समाधानम् । अत
चेद्बाहुलिकमाश्रित्य त्रिलिङ्गतां व्युत्पादयन्ति । तेषां बाहुलकाश्रयणेन ङीबादिकं व्युत्पादनीयमिति
ते द्रष्टव्यम् ।

स०—**न लोपो नञ इति** ॥ ततश्च तस्मान्नुडचीति नुडागमेऽनरायण इति स्यादिति भावः ॥
**स इति** ॥ न नञ्समासः येन नलोपादिप्राप्तिरिति भावः ॥ नन्वेवमयनशब्दस्य ल्युडन्तस्य
नेयमात् कथं नारायण इति पुलिङ्गत्वमित्यत आह ॥ **ल्युटष्टित्करणसामर्थ्यादिति** ॥ अयं
अत्र हि ङीबर्थं टित्करणमित्यभिप्रेतम् । कथमन्यथा इध्मप्रव्रश्चनी गोदोहनी इत्युपपद्यतेति ।
ते पुलिङ्गस्य ल्युडन्तस्य करणेऽधिकरणे च न नियमेन नपुंसकत्वमेवेति । अन्यथा कथं
ानयनायेमं प्रत्ययं टितं कुर्यादिति । तथापि पुलिङ्गत्वमिति कुत इति चेत् टित्करणेन नपुंसक-
। त्याजिते प्रयोगानुसारेण पुलिङ्गत्वस्यापि संभवात् । अत एव लिङ्गानुशासने इध्मप्रव्रश्चनः
। इत्यप्युदाहृतमिति ज्ञातव्यम् ।

प०— **नञ्समासे नलोपो नञ इति प्राप्नोतीति** ॥ द्वितीयाध्यायद्वितीयपादे नञिति सूत्रं
देन समस्यत इति तस्यार्थः । तथा च नञिति सूत्रेण नञोऽरपदेन समासे सति सवर्णदीर्घे च
रूपं नञश्च तदन्यतदभावतद्विरुद्धरूपार्थत्रयवाचितया प्रकृते विरुद्धार्थकत्वमुपादायारविरुद्धा
णा इति व्याख्यानेऽसुराविद्यादिशब्देष्विव नलोपो नञ इति सूत्रेण नकारलोपः प्राप्नोतीत्यर्थः ।
तृतीयपादे 'नलोपो नञ' इति सूत्रं नञः न लोपः नकारस्य लोपो भवतीत्युत्तरपदे पर इति तस्यार्थः।

शङ्कां निराह ॥ **नेति** ॥ कुत इत्यत आह ॥ **नभ्राडित्यादिष्विति** ॥ 'नभ्राण्नपान्नवे नमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये'ति सूत्रेण नभ्राडित्यादिष्वेकादशशब्देषु भवति नलोपं न प्राप्नोतीत्यर्थ इत्युक्तत्वात् । नभ्राडित्यादिषु शब्देषु मध्ये नारायणशब्दम तत्रत्यनकारोऽपि प्रकृत्या भवतीति वक्तव्यत्वादित्यर्थः ॥ चन्द्रिकायां तु प्रकारान्तरेण समा **नसमास इति** ॥ निषेधार्थकनशब्देन सहारशब्दस्य सुप्सुपेति समास इत्यर्थः । तथा न भवतीति 'नलोपो नञ' इति न प्राप्नोतीति भावः । नन्वेवं अराणां निषेध एव नारेति पदेन गुण इति चेन्न । प्रयोगानुरोधेन विरोधार्थकस्यापि नारशब्दस्य गुणवाचित्वस्य कल्प्यत्वाद्वा तद्विरोधिनो ग्रहणाद्वा गुणलाभादिति भावः । यत्तु निषेधार्थकनशब्दो नास्तीति चिन्तामणि तर्कताण्डवविवृतौ नञर्थनिर्णयवादे निरस्तमस्माभिरिति ध्येयम् । अत्रापि गणपरिपठितेत्युक्त 'चादयोऽसत्व' इति सूत्रोक्तचादिगणे नञं पृथक्पठित्वा अमानोनाः प्रतिषेध इत्यस्य पाठात् समानस्थले सत्यप्यैकपद्ये 'रषाभ्यां नो णस्समान पद' इत्यष्टमांत्यपादीयणत्वविधायकसूत्रे ( समानमेव पदं समानपदं न कदापि पूर्वोत्तरपदव्यवहारभागित्येवंरूपसमानपदत्वस्यात्राभावात्क मित्यत आह ॥ **पूर्वेति** ॥ पूर्वपदस्थान्निमित्तादुत्तरपदस्थनकारस्य णत्वं भवति संज्ञायां विषये, ग न भवतीत्यर्थः । ननु तृतीयस्य तृतीयपादे 'नपुंसके भावे क्त' इत्यतो नपुंसक इत्यनुवर्तमाने 'करणाधिकरणयोश्चे'ति ल्युटो विधानेन नारायणमिति नपुंसकेन भाव्यमित्यत आह ॥ **ल्युट** टित्करणं हि टिड्ढाणञित्यादिना ङीबर्थम् । यदि ल्युडन्तस्य नपुंसकत्वमेव स्यात्तर्हि स्त्रीत्वाभाव त्तङीबर्थं टित्करणमनर्थकमेव स्यात् । तेन ज्ञायते लिङ्गान्तरमस्तीति सामान्यतो ज्ञापनात्पुलिङ्ग रित्यर्थः ॥ **अधिकरण इति** ॥ प्रकृताभिप्रायः कोऽसावनुमानो नामेति करणेऽपि भूवादिसूत्र पुलिङ्गप्रयोगदर्शनात्करणाधिकरणयोश्चेति सूत्रे ल्युटोऽनुक्तत्वेऽपि पूर्वत्र ल्युट्चेत्यत्र नपुंसके भावे वर्तमानेन तत्र टित्करणकृत्याभावात्करणाधिकरणसूत्र एवानुवर्तितस्थले तस्य कृत्यं वाच्यमित्येव ध्येयम् ।

या०— **नलोपो नञ इतीति** ॥ नञो नस्य लोपः स्यादुत्तरपद इति सूत्रार्थः । इत्युदाहरणम् । ततश्च 'तस्मान्नुडची'ति नुडागमेऽनश्च इत्यादाविवानरायण इति स्यादिति **न भ्राडित्यादिष्विति** ॥ 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्र सूत्रे नभ्राडित्यादिषु नञ्प्रकृत्या भवतीत्युक्तत्वात्प्रामाणिकप्रयोगबलेन नारायणशब्दस्यापि तत्रोप त्वादित्यर्थः । उपसङ्ख्यानस्य वैयाकरणैरकृतत्वादाह ॥ **अथवेति** ॥ **न समास इति** ॥ गणप

यो नशब्दस्तेन सह नैकधेत्यादाविव सुप्सुपेति नित्यसमास इत्यर्थः । नित्यं क्रीडेत्यतो नित्य
वर्तत इत्युक्तत्वात् ॥ **अदोष इति** ॥ अस्य नशब्दस्य ञकारानुबन्धाभावात्तदनुबन्धवत एव न
लोपविधानादनरायण इत्यनिष्टरूपापत्तिरूपो दोषो नेत्यर्थः ॥ **पूर्वपदात्संज्ञायामिति** ॥ पूर्व
न्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति संज्ञायां न तु गकारव्यवधाने इति सूत्रार्थः । द्रुणस
णसः शूर्पणखा इत्याद्युदाहरणम् । अग इत्युक्तत्वात् ऋगयनमित्यादौ न भवति । नन्वत्र र
मित्यनेनैव कस्मान्न णत्वमुक्तम् । न च नारायणपदस्य पदद्वयसमासरूपत्वेन समानपदत्वाभावः ।
स्याप्येकविभक्त्यन्तत्वेन समानपदत्वसंभवादिति चेत् । उच्यते । रषाभ्यामित्यत्र समासरूपैक
वर्तनायाखण्डैकपदलाभायैव समानेति विशेषणस्याभिप्रेतत्वात् । अन्यथा दुर्नामा रामनामेत्यादाव
णत्वप्रसङ्गः । यथाहुः । पद इत्यनेनैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेकं
कदाचिद्भिन्नं तत्रैव यथा स्यादित्येवमर्थं तेनाखण्डपद एव भवति न समासपद इति । अतोऽत्र
तेनाप्राप्तं णत्वं संज्ञात्वाद्विधीयते । रामनामेत्यादौ तु समासत्वेऽप्यसंज्ञात्वान्न णत्वप्रसङ्ग इति ॥
मयनशब्दस्य ल्युडन्तस्य नियमेन नपुंसकत्वात्तदन्तस्य नारायणशब्दस्यापि नपुंसकतापत्तिः । न न
एव तस्य नपुंसकता नाधिकरणादिकारकेऽपीति वाच्यम् । यदनान्तमकर्तरीति लिङ्गानुशासनेऽधिकर
कारकेऽनान्तस्य नपुंसकताविधानेन तदन्तस्यायनशब्दस्यापि तथात्वस्यावर्जनीयत्वात् । अयनं वर्त्म
ध्वपन्थान इत्यमरकोशेऽपि भावभिन्ने नपुंसकस्यैव प्रयोगाच्चेत्यत आह ॥ **ल्युटष्टित्करणेति** ॥ इ
इध्मव्रश्चनी गोदोहनीत्यादौ ङीबर्थं टित्करणमित्यभिप्रेतम् । तेन ज्ञायते ल्युडन्तस्य करणेऽधिकरणे
नियमेन नपुंसकत्वमेवेति । कथमन्यथोक्तोदाहरणे स्त्रीप्रत्ययानामिमं प्रत्ययं टितं कुर्यादिति । त
पुल्लिङ्गत्वं कुत इति चेत् । उक्तरीत्या टित्करणे नपुंसकत्वनियमे त्याजिते प्रयोगानुसारेण पुल्लिङ्गत्व
संभवात् । अत एव लिङ्गानुशासने इध्मव्रश्चनः गोदोहन इत्यप्युदाहृतम् । अधिकरण इति च
त्वादेवोक्तमिति ज्ञातव्यम् ॥

च०— **नलोपो नञ इतीति** ॥ नञो नस्य लोपः स्यादुत्तरपदे परत इति सूत्रार्थः ।
'तस्मान्नुडचि, लुप्तनकारान्नञो नुडागमस्स्यादचि परत' इति नुडागमेऽनश्व इत्यादिवदनरायण इ
निष्पद्येतेति भावः ॥ **नभ्राडित्यादिष्विति** ॥ अभियुक्तप्रयोगबलेन 'नभ्राण्नपान्नवेदानासत्यान
नकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति सूत्रे नारायणशब्दोऽप्युपसंख्येय इत्यर्थः। स्त्रैणार्थ इ
नलोपापत्तिविधूननाय 'नलोपो नञ'इति सूत्रे 'रात्रेः कृती'त्यतोऽनुवृत्तविभाषायाः व्यवस्थितविभाष
न्यास एवोक्त्या प्रकृतेऽपि सामञ्जस्यान्नोपसंख्यानावश्यंभाव इति शङ्का पदमञ्जर्यामचरितार्थानुव

निपातस्यैव 'नलोपो नञ' इति सूत्रे ग्रहणाद्वृद्धिस्वरचरितार्थानुबन्धकप्रत्ययाग्रहणाद्विभाषानुवर्तनाना कतायाः समर्थिततया निर्दलैव । चान्द्रिकी तदुपगतिस्तु वृत्तिव्याख्यारूपन्यासगुणदोषचिन्तनस्यानाश्र नाभिलषितसिद्धिमभिप्रेत्येति स्थितम् ॥ पाणिनीयैरनुपसंख्यातत्वादाह ॥ **अथवेति** ॥ **गणपरिपठिते** 'चादयो सत्वे' इति सूत्रे चादिगणे नञं पृथक्पठित्वा 'अमानोनाः प्रतिषेध'इति पठितेन नश नैकधेत्यादाविव 'नित्यं क्रीडे'त्यतो नित्यमित्यनुवर्त्य सुप्सुपेति नित्यसमासोपगमेन नञ एवाभावे नलोपापत्तिरिति भावः ॥

'तत्पुरुषः समानाधिकरणः कर्मधारय' इति सूत्रे 'एकपद्यं एकस्वर्यं एकविभक्तित्वं च । तादर्थ्यात्तच्छब्दं तत्पुरुषार्थानि पदानि तत्पुरुष' इति भाष्यव्याख्यावसरे 'पदशब्देनार्थ उच्यते ऐक मित्यर्थः । अथवा समासाद्विभक्त्युत्पत्तौ सत्यां ऐकपद्यमुच्यते ॥ **एकविभक्तित्वमिति** । एकक त्वमित्यर्थः' इति कैयटोक्त्या अयतेर्ल्युटयनादेशे निष्पन्नायनशब्दनारपदयोः समासस्य पदत्वेन रेफन रूपनिमित्तनिमित्तिनोरेकपदस्थतया रषाभ्यामित्यनेनापि नारायणपदे णत्वसूचनशङ्का तु तुल्यन्त दुर्नामरामनामेत्यादिषु णत्वव्युदसनाय निमित्तिमत्पदभिन्नपदाघटितत्वरूपसमानपदतायाः शब्दरत्न परिष्कृततया पद इत्येतावतैव सामर्थ्यादेकपदत्वे लब्धे यत्समानग्रहणं यत्समानमेवपदं न कदाचि तत्रैव यथा स्यादित्येवमर्थं तेनाखण्डपद एव भवति न समास इति भाष्योक्त्या च न सङ्ग इत्यभिप्रेत्य समाधत्ते ॥ **पूर्वपदादिति** ॥ पूर्वपदस्थान्निमित्तात्परस्य गकारानन्तरितस्य नकारस्य णकारः संज्ञाविषये भवतीति सूत्रार्थः । एवं च दर्शिताखण्डपदताविरहेऽपि द्रुणसः खुरणस इत्यादाविव युक्तमित्याशयः । अग इत्यस्य प्रयोजनं तु ऋगयनमित्यादिव्यावृत्तिः । चर्मनासिकं इत्यादि व्यावृ संज्ञायामिति विशेषणम् ।

अत्र यद्यपि णत्वं दुर्लभम् । अत्र सूत्रे णत्वस्यादर्शनात् । न च रषाभ्यां नोणः समानपद सूत्रान्नोण इत्यनुवर्तत इति वाच्यम् । रषाभ्यामितिसूत्रेण ग्रहणस्य प्रत्याख्यातत्वात् । अत एव पदा मूर्धन्य इति(?) सूत्रे उत्तरार्थं मूर्धन्यग्रहणं कर्तव्यमित्यभिधाय रषाभ्यां नो णः समानपद इत्यभिधाय णकारग्रहणं न कर्तव्यं भवति । अत्रायमर्थः । पदान्तस्य नेति प्रतिषेधो न वक्तव्यो भवति । अः ताभिसंबन्धं मूर्धन्यग्रहणमनुवर्तत इत्यभ्यधान्महाभाष्ये । तथाप्यत्र च णत्वग्रहणं मूर्धन्योपल द्रष्टव्यम् ॥

अत्र जगज्जननादिकर्तृत्वसर्वोत्तमत्वादिकं शिवस्याभिलषता 'नारायणो वा इदमेक ए आसीदि'ति श्रौतनारायणपदवाच्यतां शिवस्य शङ्कमानेन नव्येन नारायणपदस्य शिवसंज्ञात्वाभ

र्वपदादित्यनेन णत्वस्य दुरुपपादतायामपि नारे अयनं यस्येति व्यधिकरणबहुव्रीहौ 'गतिकारकोपप
ाद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरि'ति परिभाषया सुबुत्पत्तेः प्रागयनशब्दस्य सप्तम्यन्तेन स
ेमित्तानधिकरणानिमित्तिमत्पदाघटितत्वरूपसमानपदत्वस्य सत्त्वान्नारायणशब्दस्य शिवे संज्ञात्वाभा
त्वोपपत्तिरिति अभिहितं तदबोधविलसितमिति गुरुपादाः । तथाहि । गतिकारकोपपदानां कृद्भिः
ामासवचनमिति परिभाषायां कारकपदेन 'कर्तृकरणे कृता बहुलमि'तिविहितकारकविशेषसमास
ातिपदोक्तपरिभाषया ग्रहणेन नारे अयनं यस्येत्यादि 'अनेकमन्यपदार्थे' इति कारकविशेषपदार्
ूत्रविहितसमासस्य सर्वथा अग्रहणात् । यथा वा 'विभाषा दिक्समासे' इति सूत्रेण या पूर्वा
त्तरा यस्याः उन्मुधायाः तस्यै उत पूर्वायै इत्यादौ सर्वनामसंज्ञापरिहारार्थं 'दिङ्नामान्यन्तराले'
ूत्रविहितकारकसमासस्यैव ग्रहणं भाष्यकारैरादृतं तथेहापि विशेषकारकसमास एव ग्राह्यः । न
ाधकाभावादस्तु सामान्यस्य ग्रहणमिति वाच्यम् । इह हि दध्नि सेको यस्मात्तद्धिसेकमित्यादिव्य
रणबहुव्रीहौ षत्वनिषेधार्थं परिभाषाप्रवृत्तये कारकविशेषसमासस्यैवाश्रयणीयत्वात् । एवं च
ायनम् इत्यादि व्यधिकरणबहुव्रीहौ परिभाषामवलम्ब्य णत्वव्युत्पादनं कथं व्यधिकरणेतरबु
ोचतान्तराम् । किञ्च गन्धर्वगानमित्युक्तपरिभाषासमाश्रयणेन निमित्तानधिकरणानिमित्तिमत्पदाघटि
त्वरूपसमानपदत्वाश्रयणेन णत्वप्राप्तौ परिभाषाया अनित्यत्वमाश्रयणीयम् । एवमपि ऋगयनमि
त्वप्राप्तौ निपातनाण्णत्वाभाव इत्युपेतव्यमेव । तदपेक्षया 'अणृगयनादिभ्य' इति निपातनात् णत्वश
रिभाषाया अप्रवृत्तिरेव लाघवात् ज्ञाप्यताम् । एवं च गन्धर्वगानं ऋगयनमित्यादिसकलोदाहरणे
ेपातनादेव णत्वाभावः समभांत्सीदिति क्वचिदनित्यत्वं क्वचिन्निपातनमिति अनेकप्रयोजककल
ावाल्लाघवम् । एवं च नारायण इत्यत्रापि निपातनसामर्थ्यात्परिभाषाऽप्रवृत्तौ कथं णत्वं प्रत्या
यधिकरणबहुव्रीहिवादे तीरे भवनं यस्यासौ तीरभवनः, पूरयानः, ग्रामगमनः, इत्यादौ तव नये
ुर्वारम् ।

मम तु विशेषसमासाश्रयणात् ऋगयनादिभ्य इति निर्देशेन णत्वप्रकरणे प्रवृत्तेरज्ञाप
ेतादृशस्थले परिभाषोपतिष्ठत इति सुबुत्पत्तेः प्राक्समासाभावान्निमित्तानधिकरणानिमित्तिमत्पदाघटितत्व
मानपदत्वमस्तीति मैव णत्वमुक्तोदाहरणेष्वतिप्रसाङ्क्षीत् । किञ्च 'अग्रग्रामाभ्यां नयतेर्णो वाच्य' इ
ार्तिकं न णत्वप्रकरणे परिभाषाप्रवृत्तिं सहते । यदि हि स्याण्णत्वप्रकरणे परिभाषा तदा अ
ामणीरित्यादौ सुबुत्पत्तेः प्राक्समासाश्रयणे निरुक्तसमानपदत्वं समभांत्सीदेवेति रषाभ्यामित्यनेनैव
सेद्ध्यर्थमेवेदं वार्तिकं स्यात् । तेन जानीमहे न णत्वप्रकरणे परिभाषा प्रवर्तत इति ॥ यदवा
कें चेह प्रतिपदोक्तपरिभाषाया अनुपस्थितेरपि उक्तपरिभाषायाः सामान्यविषयकत्वमेव । न चानुपरि

असिद्धा प्रयोजनाभावादेव तत्सिद्धेः। अत एव तद्धितेति सूत्रे कृद्ग्रहणे परिभाषा नोपतिष्ठते प्रयोजना दिति वैयाकरणा इति । तत्र गतिकारकेति परिभाषायां प्रतिपदोक्तपरिभाषानुपस्थितौ दधिसेकमि षत्वन्तीरभवनमित्यादौ णत्वं दुर्वारमेव स्यादिति तदर्थं प्रतिपदोक्तपरिभाषायाः सप्रयोजनत्वेन प्रयो भावोक्तेरज्ञानविजृंभितत्वात् ।

णत्वं रमानाथपदैकगोचरं पदे गिरीशः सहसाऽभ्यधाद्यतः ।
सुधा अत्र मानं प्रतिलाभशून्यस्त्रिदोषदुष्टः स्वयमेव नष्टः ॥ इत्यलं प्रपं

लिङ्गानुशासने नपुंसकाधिकारे भावे ल्युडन्त इत्यनेन भाववचनल्युडन्तस्यैव क्लीबन्तानुशासन इध्मप्रव्रश्चनः कुठारः गोदोहनी स्थालीति प्रत्युदाहृततया भूवादयो धातव इत्यत्र 'अशक्या क्रिया पिण्ड निदर्शयितुम् । यथा गर्भो निर्लुठितः। साऽसावनुमानगम्या । कोऽसावनुमानः इति ।' भाष्यव्याख्यान 'यो भावे ल्युट् स नपुंसकः अन्यत्र त्वभिधेयवशादनियतलिङ्ग' इति कैयटोक्त्या च ल्युट् चेत्यत्र न भावे क्त इत्यतः नपुंसके भाव इत्यनयोरनुवृत्तावपि करणाधिकरणयोश्चेत्यत्र सन्नियोगशिष्टपरिभाषावि भाव इत्यननुवृत्त्य नपुंसक इत्यनुवर्तनायोगेन यदनान्तमकर्तरि तत्तृतीये कर्तृव्यतिरिक्तकारके पदेऽनप्रत्य तृतीये नपुंसकलिङ्गे भवतीत्यमरस्य भाववचनानां तद्विषयकत्वोपपत्त्या च करणं करणी प्रमाणं प्र इत्याद्यभियुक्तप्रयुक्त्या टिड्ढाणञ् इति सूत्रे द्व्यनुबन्धकल्टः ष्टेरेत्वार्थकतया चरितार्थटकारकतया व्यावर्तनीयतेवाचरितार्थटकारकल्युटो व्यावर्तनीयताविरहेण प्रमाणभूत आचार्यो दर्भपवित्रप शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म तत्राशक्यं वर्णेनाप्यन भवितुमिति भाष्यप्रामाण्येन ङीबर्थटित्वसाफल्याय च अधिकरणसाधनल्युडन्तायनशब्दस्य त्रिलि युक्तेत्यभिप्रेत्य समाधत्ते ॥ ल्युट इति ॥ कृत्यल्युट इति सूत्रे बहुलग्रहणेनापि त्रिलिङ्गता सेर बहूनर्थान् लाति आदत्ते बहुलमिति व्युत्पत्तेराकरे स्थितत्वात् ॥

अनु०— ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम् ॥

सु—एवं नारायणशब्दं निरुच्य स एव ब्रह्मशब्दार्थ इत्याह ॥ ब्रह्मशब्दोऽपीति॥ हिश अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इत्यादिप्रसिद्धिं द्योतयति । एव शब्देन सर्वा कत्वादिपरापव्याख्यां सर्वप्रमाणविरुद्धां व्यावर्तयति ॥ ॥ अयमिति ॥ सूत्रप्रयुक्तः ।

वा०— ननु गुणपूर्तिवद्देशादिपूर्तेरपि ब्रह्मशब्दार्थत्वे बाधकाभावात्सिद्धान्ते तथाऽभ्युपगमाच्च
बृंहत्यर्थकैवकारानुपपत्तिरित्यतोऽनभिमतव्यवच्छेदार्थकतया तं व्याख्याति ॥ **एवशब्देनेति** ॥
बृंह्यर्थकत्वान्निरङ्कुशमहत्त्वार्थकेन तेन सकलवस्त्वभेदरूपवस्तुपूर्तेरप्युक्तत्वादिति परव्याख्यानादिति
। आदिपदेन सर्वात्मकत्वाद्युक्तिलब्धाद्वितीयत्वादिपरिग्रहः । सौत्रब्रह्मशब्दस्य विष्णुविषयत्व-
तेपत्तेस्तस्यैव विष्णुविषयत्वसमर्थनस्य मूलारूढतां दर्शयितुमयमिति तद्विषयतया व्याख्याति
**यमितीति** ॥

या०— **सर्वात्मकत्वादिपरव्याख्यामिति** ॥ यद्यपि ब्रह्मशब्दान्नित्यशुद्धबुद्धमुक्तस्वभावं सर्व-
समन्वितं प्रतीयते, बृहधातोरर्थानुगमादित्येव परेण व्याख्यातम् तथाऽपि पञ्चपादिकारेणैतद्भाष्य-
व्यानावसरे यदि ब्रह्मातिरिक्तं वस्तु किञ्चित्स्यात्तदा तद्रूपविकलत्वाद्ब्रह्मणोऽल्पत्वं स्यात् । तच्च
नेशयमहत्त्वपराद्ब्रह्मशब्दादेवापास्यते । तस्मादेकरसमद्वैतं वस्तु ब्रह्मपदात्प्रतीयत इत्युक्तम् । तद-
येण सर्वात्मकत्वादित्युक्तम् । आदिपदाद्देशादिकृताल्पतानिराकरणं बुद्धत्वादिकं च ग्राह्यम् ॥
**माणविरुद्धमिति** ॥ सर्वात्मकत्वं हि चेतनभेदाभावेऽचेतनमिथ्यात्वे च पर्यवस्यति । अत एवै-
मद्वैतमित्युक्तम् । तदुभयं च सर्वप्रमाणविरुद्धमित्यर्थः । एवमादिशब्दोपात्तस्य देशादिपरिच्छेदा-
स्य देशादेरभावात्तत्कृतः परिच्छेदो नास्तीति यत्तदीयमुपपादनं तदपि सर्वप्रमाणविरुद्धमिति द्रष्टव्यम् ॥

च०—**सर्वात्मकत्वादीति** ॥ त्रिविधपरिच्छेदाभावरूपमहत्त्वार्थेन ब्रह्मशब्देनैव सर्वात्मकता-
ादिति व्याख्यातत्वादिति भावः । प्रपञ्चितं चैतत् चन्द्रिकायाम् ।

अनु०— **अतो नारायणस्यैव जिज्ञासाऽत्र विधीयते** ॥

**सु०—किमतो यद्येवमित्यत आह ॥ अत इति ॥ यतो ब्रह्मशब्दो नारायणशब्दसमाना-
तो ब्रह्मजिज्ञासा कर्तव्येति वाक्येन नारायणस्यैव जिज्ञासा विधीयत इति ज्ञायत (इत्यत)
र्थः ।**

अनु०— सिद्धत्वाद्ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ ॥

सु०— यस्तूक्तामर्थसमाख्यां निर्वचनान्तरदर्शनान्नानुमन्यते । तं प्रत्युपपत्त्यन्तर
॥ सिद्धत्वादिति ॥ तदेव ब्रह्म परमं कवीनामित्यस्यां श्रुतौ ब्रह्मशब्दस्य विष्णौ स्पष्ट
मुख्यतया सिद्धत्वाच्च सौत्रो ब्रह्मशब्दो विष्णुपर इति ज्ञायत इत्यर्थः ॥ एतदुक्तं भवा
मुख्यामुख्ययोर्हि मुख्यस्तावद्ग्राह्यः, शक्तिवशात्तस्यैवादौ बुद्धिसन्निधानात् । तदनुप
अमुख्यः । दृष्टं चैतदुभयं गङ्गायां जलं गङ्गायां घोष इत्यादौ । ब्रह्मशब्दश्च विष्णावेव मुख्य
ादेव ब्रह्मेति श्रुतेः । अत्र हि विष्णोरन्यस्य ब्रह्मत्वं निषिध्यते । त(त्र)तो ब्रह्मशब्दस्य विष्ण
ाक्तिर्नान्यत्रेति व्याख्यानाङ्गीकारेऽभिधानादिविरोधः स्यात् । अतो मुख्यवृत्तिर्विष्णा
ान्यत्रेति व्याख्यानमुचितम् ॥ न चात्र सूत्रे ब्रह्मशब्देन मुख्यार्थस्य विष्णोः परि
ाधकमस्ति । अतः प्रकरणादिसद्भावेऽसद्भावे वा विष्णुपर एवायं ब्रह्मशब्द इति ज्ञायत इ

वा०—ननु श्रुतौ ब्रह्मशब्दस्य विष्णुविषयतायाः स्पष्टत्वमात्रेण न सौत्रस्य तस्य विष्णुविष
ेक्ष्यतीत्यतोऽस्य मुख्यामुख्यन्यायसूचकत्वेन तद्बलात्तत्सिद्धिरित्याशयेन स्पष्टताशब्दं मुख्यार्थत
ाख्याति ॥ स्पष्टतयेति ॥ ननु मुख्यस्यैव सौत्रब्रह्मशब्देनोपादाने न नियामकम् । तथात्वे ब्रं
ह्मेत्यत्रापि जीवोपादानं न स्यात् । कथं चानया श्रुत्या विष्णौ तस्य मुख्यत्वसिद्धिः । अतोऽन्त
करणादेरनुसर्तव्यत्वे मुख्यत्वोक्तेर्वैयर्थ्यमित्यत आह ॥ एतदुक्तं भवतीति ॥

प०— अर्थसमाख्यां नारायणशब्दार्थसमाख्याम् । ननु श्रुतौ मुख्यत्वोक्तावपि अत्र स
ख्यस्य ग्रहणं कुतः, श्रुतौ वा कथं मुख्यत्वस्य स्पष्टत्वं मुख्यपदाभावादित्यत आह ॥ एतदु
वतीति ॥ अतो मुख्यवृत्तिरिति ॥ परममुख्यवृत्तिरित्यर्थः ॥ मुख्यवृत्तेर्बृहजातिजीवकमलास
ाद्यभिधानसिद्धत्वेन तन्निरासायोगात् ॥ प्रकरणादीति ॥ 'स विष्णुराह ही'त्यादिविष्णोर्ब्रह्मशब्दा
त्वोक्तिपरब्रह्मप्रकरणादीत्यर्थः । आदिपदेन श्रुतिलिङ्गादिपरिग्रहः ।

या०— निर्वचनान्तरदर्शनादिति ॥ नारायणशब्दस्य आपो नारा इति प्रोक्ता इ
त्यादिसिद्धनिर्वचनान्तरदर्शनादित्यर्थः ॥ मुख्यवृत्तिरिति ॥ परममुख्यवृत्तिरित्यर्थः । अतो ना
भिधानादिविरोध इति ध्येयम् ॥

च०— निर्वचनान्तरदर्शनात् ॥ आपो नारा इति प्रोक्ता इति स्मार्तनिर्वचनान्तरदर्शनात्
ख्यवृत्तिरिति ॥ परममुख्यवृत्तिरित्यर्थः ॥

अनु०—　　अम्भस्यपार इत्युक्तो नारायणपदोदितः ॥
आपो नारा इति ह्याह

सु०— स्यादेतत् । यदि तदेव ब्रह्मेत्यस्यां श्रुतौ तच्छब्दपरामृष्टो विष्णुर्भवेत्तदे
। इत्यत आह ॥ अम्भसीति ॥ तदेव ब्रह्मेत्यस्य ह्यम्भस्यपारे भुवनस्य मध्ये नाकस्य पृ
तो महीयानित्युपक्रमवाक्यम् अत्र नारायणपदोदित एवोक्तः ॥ एतदुक्तं भवति । अम्भ
पार इत्युपक्रमवाक्यं तावन्नारायणपरम् नारायणशब्दसमानार्थत्वात् । तथा च प्रकृत
ामर्शं परित्यज्याप्रकृतपरामर्शाङ्गीकारायोगात्तदितिपरामृष्टो विष्णुरेवेति ।

अम्भस्यपार इति वाक्यं कथं नारायणपदसमानार्थमित्यत आह ॥ आप इति
यस्मात् 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायण
ृतः' इति स्मृतिरप्सु स्थितत्वं नारायणशब्दार्थमाह । तस्मादपारेऽम्भसि स्थित इति वाक
रायणशब्दसमानार्थं भवतीति ।

वा०— ननु तदेवेत्यत्र विष्णोः परामर्शविषयतोपपादनायाम्भस्यपार इत्युपक्रमवाक्ये नाराय
ोदितत्वोक्तिरसङ्गता साक्षाद्धेतोरनुक्तत्वात् । नारायणपदोक्तिमात्रेण व्यवहितस्यापि हेतोरलाभादित्य
ाह ॥ एतदुक्तं भवतीति ॥

प०— ननु तच्छब्दपरामृष्टो विष्णुः कुत इति प्रश्न अम्भसीति वाक्योक्तो नारायण इ
धिकरणम् । तत्रोक्तस्य नारायणत्वं निर्बीजमित्यत आह ॥ एतदुक्तं भवतीति ॥ इति ह्याहेत्यत्र
ाहारमाह ॥ इति स्मृतिरित्यादि ॥

अनु०—　　स एवाप्स्वन्तरीरितः ॥
कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ॥
योनित्वेनात्मनः

सु०— किञ्च शाखान्तरे मम योनिरप्स्व१न्तरिति विष्णुरेवाप्स्वन्तरीरितस्तत्सम
पानाच्चाम्भस्यपार इत्युपक्रमवाक्यं विष्णुपरमित्याह ॥ स एवेति ॥ स्यादेतत् । यदि म
ोनिरिति शाखान्तरस्थमपि वाक्यं विष्णुपरं स्यात्तदेव कुत इत्यत आह ॥ स्वयमिति

श्रीशब्दोऽन्यत्राप्युपचाराद्वर्तते । यथोक्तम् 'ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः' इति तद्व्युदासार्थं स्वयमित्युक्तम् । महालक्ष्म्या मम योनिरित्यात्मनः कारणत्वेनेरितत्वादप्स्वः रित्युक्तो विष्णुरेव ॥ भवेदेतत् । यदीदं श्रीवाक्यं स्यात्तदेव कुतो निश्चेयम् । अम्भृणी रागात्मानं तुष्टावेत्यम्भृणीवाक्यत्वस्योक्तत्वादित्यत आह ॥ कामत इति ॥ अत्र हि कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामित्यादिनाऽस्या अम्भृण्या वा स्वेच्छामात्रेण ब्रह्मरुद्रादिपददातृत्वं प्रतीयते । न चैतच्छ्रियं विनाऽन्यस्या युक्तमन्या ब्रह्मसृष्टत्वात् । अतः परशक्तेः श्रिय एवेदं वाक्यमिति निश्चीयते ॥ अथवा श्रियाऽऽत्म योनित्वेनोक्तत्वादप्स्वन्तरिति विष्णुरेवोच्यत इत्युक्तम् तन्न श्रीयोनित्वस्य ब्रह्मरुद्राद्यन् ामस्मिन्संभवात्; इत्याशङ्काऽपनोदाय कामत इत्यादिविशेषणमुक्तम् ।

वा०— श्रियोक्तत्वादित्युक्ते स्वयमित्यस्यानुक्तिसिद्धत्वात्स्वयमिति व्यर्थमित्यतो मुख्यत्वं स्व ाब्दार्थ इत्यभिप्रेत्य तद्व्यावर्त्यमाह ॥ श्रीशब्द इति ॥ पूर्वं श्रिया स्वकारणत्वेनोक्तत्वादिति हेतोरसिद्धि रिहारकत्वेन कामत इत्यादिविशेषणं योजितम् । अधुना तस्यैव हेतोरप्रयोजकत्वपरिहारकतयाऽ ादेव योजयति ॥ अथवेति ॥

प०— स एवेत्यादि योजयति ॥ किं चेति ॥ यथोक्तमिति ॥ भारततात्पर्यनिर्ण नष्टादशेऽध्याये । ताः शचीशामलोपानाम्न्यः । अम्भ्रणी वाक् अम्भ्रणीनामिका वागित्यर्थः

अनु०— विष्णोस्तिष्ठन्तीत्युदितस्य च ॥
यस्मिन्देवा अधीत्युक्त्वा

सु०— एवं नारायणशब्दसमाख्ययाऽम्भृणीसूक्तसमाख्यया चाम्भस्यपार इत्युपक्रम ाक्यस्य विष्णुविषयत्वं समर्थ्य तदेव ब्रह्मेति परामर्शस्य तद्विषयत्वं समर्थितम्; हेत्वन्तरेणा मर्थयते ॥ विष्णोरिति ॥ सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ऐतरेयश्रुतावाज्ञाधृतमहदादिदेवतासमूहत्वेनोदितस्य विष्णोरत्रापि यस्मिन्निदं सञ्च विचैधि स स्मिन्देवा अधि विश्वे निषेदुरिति सर्वदेवाश्रयत्वमुक्त्वा तदेव ब्रह्मेत्यब्रवीदिति संबन्धः यमर्थः । तदेव ब्रह्मेति परामर्शविषयो हि यस्मिन्देवा इति सर्वदेवाश्रयत्वेन प्रतीयते च शाखान्तरे सप्तार्धगर्भा इति विष्णुधर्मत्वेनावगतम् । अतोऽपि तदिति परामृश्यमानं ष्णुरेवेति ।

**वा०**— विष्णोरित्युत्तरवाक्यस्याप्युपक्रमस्य विष्णुविषयत्वसमर्थनार्थत्वभ्रान्तिं निवारयितुं त्तरप्रकरणविषयं विविच्य दर्शयति ॥ **एवमिति** ॥ एवमुत्तरत्रापि पूर्वशेषत्वभ्रान्तिनिवारणायावत द्रष्टव्यम् । अनेनोक्तहेतुस्वरूपस्य स्पष्टाप्रतीतेराह ॥ **अयमर्थ इति** ॥

**प०**— **सप्तेति** ॥ आर्धगर्भा आसमन्तात् ऋद्धब्रह्माण्डगर्भाः सप्त महदहङ्कारपञ्चमह देवताः भुवनस्य रेतो रतिप्रदस्य विष्णोः प्रदिशा आज्ञया विधर्मणि विविधधारणकर्मणि तिष्ठ श्रुत्यर्थं हृदि निधायाह ॥ **आज्ञाधृतेत्यादि** ॥ **अत्रापीति** ॥ उपनिषद्यपीत्यर्थः । मूले इत्यु क्त्वाप्रत्ययान्तस्यान्वयमाह ॥ **उक्त्वा तदेव ब्रह्मेत्यब्रवीदिति संबन्ध इति** ॥ तदेव ब्रह्म वीदिति श्रवणेऽपि चशब्द इति शब्दार्थ इति वक्ष्यमाणत्वाद्ब्रह्मेतीत्यनुवादः ॥

**अनु०**— समुद्रं स्थानमेव च ॥

**सु०**— **लिङ्गान्तरमाह ॥ समुद्रमिति ॥ यमन्तः समुद्रे कवयो वयन्तीत्यस्य पु समुद्रस्थानं चोक्त्वा तदेव ब्रह्मेत्यब्रवीत्तस्मादपि समुद्रस्थानत्वलिङ्गाद्विष्णुरेव परामर्श इति गम्यते । एवशब्देन समुद्रस्थानत्वं मम योनिरप्स्वन्तःसमुद्र इत्यादिश्रुतेरन्यत्रानव मित्याह । विष्णोरेव यत्समुद्रस्थानत्वमिति योजना ।**

**वा०**— विष्णोरित्यनुवर्तितेनैवकारसंबन्धेन योजनां प्रदर्शयितुमेवकारव्यावर्त्यमाह ॥ **शब्देनेति** ॥

**प०**— **कवयो वयन्तीति** ॥ जानन्तीत्यर्थः । नन्वेवशब्देनान्यत्रानवकाशमाहेत्ययुक्त स्थानपदेनान्वितेन तादृशार्थालाभादित्यत आह ॥ **विष्णोरेवेत्यादि** ॥ अनेन विष्णोरिति षष्ठ्य समुद्रं स्थानमेव नाम चाक्षरमित्येवेत्यत्रापि संबन्ध इत्युक्तं भवति ॥

**श्री०**— ननु समुद्रस्थानं कथं विष्णोर्लिङ्गमित्यतो मूले भावप्रधानो निर्देश इत्यभिप्रेत्या **विष्णोर्यत्समुद्रस्थानत्वमिति** ॥ विष्णोर्यत्समुद्ररूपस्थानवत्त्वं तदुक्त्वेत्यर्थः ।

अनु०— नाम चाक्षरमित्येव ऋच इत्युदितं तु यत् ॥

सु०— युक्त्यन्तरमाह ॥ नाम चेति ॥ यदक्षरे परमे प्रजा इत्यस्याक्षरमिति नाम चोक्त्वा तदेव ब्रह्मेत्यब्रवीत् । अतश्च विष्णुरेव तदिति परामृश्यते ॥ अक्षरनामान्यस्य किं न स्यादित्यत उक्तमेवेति । विष्णोरेवेत्यन्वयः ॥ तत्कुत इत्यत आह ॥ ऋच इति ॥ ऋचोऽक्षरे परमे व्योमन्निति यदक्षरनाम वामनसूक्ते विष्णौ प्रयुक्तमिति । तुशब्देनाक्षरनाम्नो विनाशाभावार्थतालक्षणं विशेषं द्योतयति । न हि विष्णोरन्यस्याविनाशित्वं संभवतीति वियदधिकरणे वक्ष्यते ।

वा०— समुच्चयार्थकचशब्दस्य वैयर्थ्यात्प्रकारसमर्पणस्यावश्यकत्वादब्रवीदिति क्रियां प्रति वाक्यस्यैव कर्मत्वौचित्याच्चेतिशब्दार्थतया चशब्दं व्याचष्टे ॥ ब्रह्मेतीति ॥

प०— यदिति यस्मादित्यर्थे । मूले नाम चाक्षरमित्येव ऋच इत्यत्र 'ऋत्यक' इति सूत्रेण विकल्पेन प्रकृतिभावस्य स्पष्टत्वादनुक्तिः ।

या०— वियदधिकरण इति ॥ तत्र ब्रह्मव्यतिरिक्तस्य सर्वस्योत्पत्तिरेव यद्यपि वक्ष्यते न तु विनाशित्वं तथाऽप्युत्पत्तिमतो भावस्य विनाशित्वं नियतमिति तदपि तत्र विवक्षितमित्यभिप्रेत्यैवमुक्तम् । अत एव तत्त्वप्रकाशिकायामुत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमित्युक्तम् ॥

च० — वियदधिकरणे वक्ष्यत इति तत्रेशान्यसामान्यस्योत्पत्तिमात्रसमर्थनेऽपि जनिमतो नाश-नैयत्यादित्याशयेनेयमुक्तिः । अत एव उत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमिति तदभिध्यानादिति टीकोक्तिः ॥

अनु०— यतः प्रसूतेत्युक्त्वा च तदेव ब्रह्म चाब्रवीत् ॥ १ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्याये जिज्ञासाधिकरणं समाप्तम् ॥

सु०— लिङ्गान्तरमाह ॥ यत इति ॥ यतः प्रसूता जगतः प्रसूतीति प्रकृतिकारणत्वं चास्य पुरुषस्योक्त्वा तदेव ब्रह्मेत्यब्रवीत् । प्रकृतिकारणत्वं च मम योनिरप्स्व१न्तस्तस्माद्व्यक्त-मुत्पन्नं त्रिगुणं द्विजसत्तमेत्यादिश्रुतिस्मृतिषु विष्णोरेव प्रसिद्धम् । अतः स एव तदिति परामर्शगोचर इति ॥ ब्रह्म चेति चशब्द इतिशब्दार्थे ।

तदेवं तदेव ब्रह्मेतिवाक्यस्य विष्णुविषयत्वाद्ब्रह्मशब्दो विष्णावेव मुख्य इति स्थिते सौत्रोपि ब्रह्मशब्दस्तत्पर एवेति सिद्धम् ॥

प०— ब्रह्मान्यच्चाब्रवीदिति भ्रमनिरासाय निपातानामनेकार्थत्वादाह ॥ चः शब्दार्थ इति ॥

श्री०— **यतः प्रसूतेति** ॥ सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया प्राप्तेष सृष्ट्युं

सु०— अत्र केनचित्प्रलपितं श्रौतस्य ब्रह्मशब्दस्य जात्यादिकमर्थान्त यद्भाष्यकारीयं निराकरणं तदनुपपन्नम् । यतः सूत्रकार एव जन्माद्यस्य यत इति उ दिकारणं ब्रह्मेति वक्ष्यति । न हि जात्यादेर्जगज्जन्मादिकारणताऽस्तीति ॥ तदतीव सौत्रब्रह्मपदश्रवणे जात्यादिप्रतिभास एव न भवतीति वा तन्निराकरणमकर्तव्य जातोऽपि प्रतिभासो लक्षणसूत्रपर्यालोचनया निवर्तत इति । नाद्यः गृहीतसङ्गते प्रतिभासस्यावर्जनीयत्वात् । द्वितीये त्वयाऽप्यर्थान्तरप्रतिभासस्तन्निराकरणं चाङ्गी तथाप्युत्तरवाक्यपर्यालोचनां विहाय किं युक्त्यन्तरान्वेषणेनेति चेन्न । प्रथमप्राप्तं स हीत्यादिवाक्यं विहाय किमुत्तरान्वेषणेनेत्यपि वक्तुं शक्यत्वात् । न चोत्तरसूत्रपर्या अयं निर्णयो न कार्य इत्युक्तं भाष्यकृता । तस्माद्यत्किञ्चिदेतत् ।

वा०—भाष्यकारस्य ब्रह्मशब्दार्थसमर्थने केनचिदुद्भावितामचातुरीमाशङ्क्य परिहरति ॥ **सौत्रेति** ॥ न चैतत्पक्षाप्राप्तिर्यतः सूत्रकार एवेत्यादिना स्वयमेव द्वितीयपक्षमात्रविषयकस्व प्रकटनादिति वाच्यम् । प्रकारस्य प्रकारान्तरादूषकत्वस्य सर्वसिद्धत्वेऽप्येवमाशङ्कमानस्याशङ्कैव अथाप्याशङ्का चेदुत्तरसूत्रपर्यालोचनयैव तत्परिहार इत्यभ्युच्चयेनापि तदुक्तेः संभवेन सूत्रकारीय देतच्छङ्काया एवानुदय इति तत्पक्षाभिप्रायस्यापि संभवादित्याशयात् । उत्तरसूत्रालोचनया सूत्रानारूढपरिहारापेक्षयान्तरङ्गत्वादिति युक्तिं सूचयति ॥ **युक्त्यन्तरेति** ॥ अत एव ततोऽप परिहर्ता दर्शयति ॥ **प्रथमेति** ॥ ननु परिहारान्तरं पूर्वसूत्रान्वेषणेन कृतवता भाष्यकृतार्थात् दूषितमेव भवतीत्यतः प्रकारस्य प्रकारान्तरादूषकत्वन्यायविरोधस्तर्हीत्याशयेनाह ॥ **न चेति** ॥

प०— नन्वेवं जन्मादिसूत्रेण निर्णयो विरुध्यत इत्यत आह ॥ **न चोत्तरसूत्रेति** ॥

श्री०— **निवर्तत इति** ॥ तथाच भाष्यकारीयं तन्निकारणं व्यर्थमिति भावः ॥

सु०— एतेनैतदपि निरस्तम् । यत्परेण तत्किं ब्रह्म प्रसिद्धमप्रसिद्धं वा, प्रसिद्धं चे
जिज्ञास्यमप्रसिद्धत्वे न जिज्ञासितुं शक्यमित्याशङ्क्य, प्रसिद्धमेव ब्रह्म ब्रह्मशब्दात्सर्वे
ात्म(क)त्वाच्च । तथाऽपि देहात्मत्वादिविप्रतिपत्तिसद्भावाज्जिज्ञास्यमित्युक्तम्। ब्रह्मजिज्ञासापदे
ः सकलजगज्जन्मादिकारणस्य भगवतो नारायणस्य जिज्ञासा विधीयत इत्युपपादितम्
त्र जीवात्मनि प्रसिद्धिविप्रतिपत्तिव्युत्पादनस्य कोऽवसरः । जीवात्मनो ब्रह्मत्वजिज्ञा
ह्मजिज्ञासेति चेन्नैवं सूत्रकार आहेत्यलम् ।

तदेवमधिकारिविषयप्रयोजनाभिसंबन्धवत्त्वाद्ब्रह्मजिज्ञासा कर्तव्येत्यारम्भणीयमिदं शास्त्र
ते सिद्धम् ॥ ॥

॥ इति श्रीमन्न्यायसुधायां जिज्ञासाधिकरणं समाप्तम् ॥ १ – १–१॥

वा०— एतेनेति ॥ पूर्वोत्तरसूत्रानुसारेण सकलजगज्जन्मादिकारणस्य विष्णोर्ब्रह्मशब्दार्थत्व
त्पादनेनेत्यर्थः ॥ प्रसिद्धं चेदिति ॥ प्रमाणान्तरप्रसिद्धस्य शास्त्रविषयत्वासंभवादिति भावः ॥ अप्र
द्धत्व इति ॥ सामान्यतोऽप्यज्ञातस्य बुद्ध्यनारूढतया जिज्ञासितुमशक्यत्वादिति भावः ॥ ब्रह्मशब्दा
ति ॥ वैदिकब्रह्मशब्दस्य निरर्थकत्वायोगात्स्वर्गादिपदवत्कस्यचिदर्थस्य कल्प्यत्वे प्रसिद्धपदसमभि
हारेण निगमनिरुक्तव्याकरणाद्यनुसारेण शब्दार्थविषयस्य कल्प्यत्वाद्वृद्ध्यर्थकबृहधातुनिष्पन्नस्य तस्
रणोपपाद्यताभावेन निरङ्कुशमहत्त्वरूपार्थासिद्धेब्रह्मशब्दादेव तत्सिद्धिरित्याशयः ॥ सर्वस्यात्मत्वा
ते ॥ सर्वोप्यात्मास्तित्वं प्रत्येत्यहमस्मीत्यात्मा च ब्रह्मेति भावः । देहात्मवादीत्यादिपदेनेन्द्रियमनो
द्धिशून्यविज्ञानसङ्घातात्मत्वादिविप्रतिपत्तिपरिग्रहः । एतेनेति परामर्शविषयं प्रदर्शयति ॥ ब्रह्मजिज्ञा
पदेनेति ॥

नारायणस्येति ॥ स विष्णुराह हि तं ब्रह्मेत्याचक्षत इति स्वोपपादितप्रकारेण लब्धस्य
लजगज्जन्मादिकारणस्येति वक्ष्यमाणसूत्रानुसारेण लब्धस्य ब्रह्मशब्दार्थस्य कथनं तत्रेति । तथा
न्यस्य जिज्ञास्यत्वेनान्यत्र प्रसिद्ध्यादिव्युत्पादने वैयधिकरण्यमित्यर्थः । न चात एवात्मैव ब्रह्मेत्युक्तमिति
च्यम् । उत्तरसूत्रादौ जीवादिव्यावृत्तजगज्जन्मादिकारणत्वोक्त्यादिना जिज्ञास्यस्य पूर्वसूत्रे विष्णुत्वे-
नस्य ब्रह्मणो जीवात्मकत्वाशयस्य दुराशामात्रत्वादात्मब्रह्माभेदस्याद्याप्यसिद्धतया ब्रह्मोद्दिश्यात्मभेदविधा-
ब्रह्मण्येव तयोर्वक्तव्यत्वाच्चेति भावः । ननु ब्रह्मजिज्ञासापदस्य न भवदुक्तोऽर्थः किन्तु जीवात्मनो
त्वजिज्ञासेत्येव तथा च नानुपपत्तिरित्याशङ्कते ॥जीवेति॥ लोके निश्चितेन धर्मिणैवानिश्चितेन प्रकारेण
शेष्य विचारपदप्रयोगात्सूत्रे जीवपदं श्रूयेत । धर्मजिज्ञासेत्यादाविव श्रुतस्य ब्रह्मपदस्य कस्य कथं विचार

देशस्तथा । एवं च विशेष्यैकदेशं विशेषणं कृत्वा समास इत्यर्थः । सृष्टिस्थितिभङ्गमिति नपुं
लिङ्गं तु जन्मादीति सूत्रानुसारेण समाहारविवक्षयेति द्रष्टव्यम् । अत्र तद्गुणेतिविशिष्यग्रह
व्यवहितपूर्वगतद्गुणसंविज्ञानः स इति सूचयति ॥ श्रुतिषु कृत्स्नप्रपञ्चसृष्ट्याद्यष्टककारणत्वोक्तावपि
हिरण्यगर्भजन्मादिमात्रोक्तौ न किञ्चिद्बाधकमिति हेत्वप्रयोजकत्वशङ्काऽनुत्थानाय पीठिकामारभ
श्रौतं हीति । सङ्कोचकारणाभावाद्योग्यतया संबद्धकृत्स्नप्रपञ्चस्य सृष्ट्यादेरित्यर्थकथनेनास्येति पद
सूचनेनाद्यस्य, सृष्ट्याद्यष्टकमिति चोत्तरद्वयस्य, निरासंसूचनम् ।

स० — **जन्म आदिर्यस्यावस्थानस्येति** । अत्र अतद्गुणसंविज्ञानबहुव्रीहिः ॥ **तद्गुणसं**
**ज्ञानेति** । ते समस्यमानपदार्था गुणा उपसर्जनभूता संविज्ञायन्ते प्रधानभूतान्यपदार्थेन सह
पदान्तरपदार्थान्विततया स्वीक्रियन्ते यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञान इत्यर्थः ।

प० —नन्वेवं यथासूत्रं सृष्ट्यादिह्रासु श्रुतिषु हरेरुदित इति वाच्येऽनेकधाऽऽदिपदार्थोक्तेरु
न पश्याम इत्यतस्तदनुरोधेनान्यथाऽप्यवतारयति **आद्यस्येत्यादिना** ॥ अतद्गुणसंविज्ञानबहुव्रीहिमुपेत्य
प्रसिद्धिमाह **जगत्पालको हीति** । 'विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः' इत्यादौ प्रसिद्धिरित्य
**तद्गुणेति** । तस्य गुणभूतस्यान्यपदार्थे संविज्ञानं यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानबहुव्रीहिः; तमुपा
त्यर्थः । सृष्टिस्थितिभङ्गमिति समाहारः ॥ **इहेति** । सूत्रे ॥ **श्रुतयश्चेति** । 'यतो वा इमानि भूतानि
'य आत्मानमन्तरो यमयति' इति 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि वि
इत्येवं रूपाश्चन्द्रिकोक्ता द्रष्टव्याः । आद्यश्रुतौ सृष्टिस्थितिप्रलयमोक्षाणाम्, 'य' इत्यत्र नियमनस्य, '
इत्यत्र ज्ञानाज्ञानबन्धमोक्षाणां श्रवणात् ॥ यद्वा सन्न्यायरत्नावल्युक्ताः 'यतः प्रसूता जगतः प्र
'सर्वे निमेषा जज्ञिरे' 'यस्मिन्निदं सं च विचैधि सर्वम्' इत्यादयो नारायणानुवाकस्थाः श्रुतयो ग्राह्य

या० — **जगत्पालको हीति** । तथा च अतद्गुणसंविज्ञानबहुव्रीहिरिति भावः ॥ **तद्गुणसं**
**ज्ञानेति** । तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते; तस्य गुणत्वेन संविज्ञानं यस्मिन्समासे स तथो
सर्वस्य विशेषणत्वे समासासंभवात्समासार्थैकदेशो विशेषणमिति लभ्यत इति कल्पतरौ व्याख्या
विवरणेऽपि अनेनैवाभिप्रायेण विशेष्यैकदेशमेव विशेषणं कृत्वा समासस्तद्गुणसंविज्ञानः, यथा 'लम्ब
देवदत्तः' इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यत इत्युक्तम् । प्रकृते च यद्यपि समा
भूता जन्मस्थितिभङ्गाख्योऽपि विशेष्यास्तथाऽपि तदेकदेशस्य जन्मनो विशेषणत्वविवक्षयाऽयं स

तद्गुणसंविज्ञान इत्युच्यत इति भावः ॥ जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी इत्यन्यपदार्थो य वेशेषणरूपेण विवक्ष्यते तर्हि जन्मादी अस्येति निर्देशे गौरवं स्यात्तन्मा भूदिति सामान्यविवक्ष पुंसकप्रयोगः सूत्रे कृतः । तत्र नपुंसकैकवचनप्रयोगार्हं समाहारमाह **सृष्टिस्थितिभङ्गमिति** ।

**श्री० — श्रुतयश्चेति** । 'यतो वा इमानि भूतानि' इति, 'य आत्मानमन्तरो यमयति' इति, 'क्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्येवंरूपाश्चन्द्रिकोक्ता ज्ञातव्याः ।

**च० — तद्गुणसंविज्ञानेति** । तस्मिन् गुणस्तद्गुण इति विग्रहोपगमेन समासशक्तिविषयत त्रान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नस्तद्गुणपदेनाभिधीयते स सम्यक्समभिव्याहृतपदाथ रान्वयितया विज्ञायतेऽनेनेति व्युत्पत्त्या समभिव्याहृतपदार्थान्तरान्वयविषयतानिरूपितदर्शितप्रकारत त्रनिष्ठविषयताशालिशाब्दधीजनकत्वं तद्गुणसंविज्ञानत्वम् । तद्यथा लम्बकर्णमानयेत्यादौ आनयन यायां कर्णादेरप्यन्वयात् । चित्रगुमानयेत्यादावानयनक्रियायां स्वामिन एवान्वयेन गवामनन्वया द्गुणसंविज्ञान इति तस्य व्यपदेशः । एवं च जन्मादीत्यत्र स्थितिभङ्गयोरेव ब्रह्महेतुकतापत्त्य न्मनोऽन्यहेतुकताप्रसङ्गेनातद्गुणसंविज्ञानो नोपपद्यते । तद्गुणसंविज्ञानतायां समासार्थीभूतसमुदाय शेषणतापन्नसमुदायिभूतजन्मनोऽपि ब्रह्महेतुकतासिध्या सामञ्जस्यमित्याशयः ॥ **सृष्टिस्थितिभङ्गमिति** पि जन्मस्थितिभङ्गानां त्रयाणां समासजनितशाब्दधीविषयतया भङ्गपदस्य बहुवचनान्ततैव न्याय्या प्येकस्थानावस्थितमहीरुहेषु संहत्यवच्छिन्नेषु एकवचनान्तवनपदव्यपदेशदर्शनेन प्रकृतेऽपि संहत्य च्छिन्नानां समासार्थतया समाहारोपाधिकत्वेन 'सर्वो द्वन्द्वः विभाषयैकवद्भवति' इति कात्यायनोक्त्या चैक नस्याप्युपपत्तेः । समुदायसमुदायिनोरैक्येन विशेषशक्त्याहितभेदेन चान्यपदार्थवतिपदार्थत्वे घटनीये भावः । प्रपञ्चितं चैतत्सर्वादीनीति सूत्रे शब्दकौस्तुभे । तस्यान्यपदार्थस्य गुणानां वतिपदार्थरूपाण शेषणानां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यादिना । अत्र व्याचक्षणाः "तच्छ न बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते । तस्य गुणत्वेन संविज्ञानं यस्मिन् समासे स तथोक्तः । सर्वस्य षणत्वे समासासंभवात्समासार्थैकदेशो विशेषणमिति लभ्यत इति कल्पतरौ व्याख्यातम् । विवरणे- नैवाभिप्रायेण विशेष्यैकदेशमेव विशेषणं कृत्वा समासस्तद्गुणसंविज्ञानः, यथा 'लम्बकर्णो देवदत्तः' त्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यत इत्युक्तम् । प्रकृते च यद्यपि समासार्थभूताः स्थितिभङ्गास्त्रयोऽपि विशेष्यास्तथापि तदेकदेशस्य जन्मनो विशेषणत्वस्य विवक्षयाऽयं समासस्तद्गुण- ज्ञान इत्युच्यत इति भावः" इति व्याचक्षते ।

सु०— ननु सृष्टयादिहेतुत्वं प्रत्येकं ब्रह्मलक्षणम् उत मिलितम् । आद्येऽनेकलक्षणोक्तिवैयर्थ्यम् । न द्वितीयः । एकैकस्य व्यभिचाराभावात् । संभवे व्यभिचारे च विशेषणमर्थवत् । इत्यत आह सृष्टिरिति ॥ अत्रासमासकरणेन प्रत्येकं लक्षणत्वं सूचयति । न चानेकलक्षणोक्तिवैयर्थ्यम् । जिज्ञास्यब्रह्मणो हि सर्वव्यावृत्तये लक्षणमत्रोच्यते । न चैकमेव सर्वत्र जिज्ञासाविधायकश्रुतिषु लक्षणं श्रूयते । किं त्वासु ब्रह्मजिज्ञासाविधात्रीषु श्रुतिषु क्वचित्सृष्टिः क्वचित्स्थितिरित्यष्टकं जिज्ञास्याद्धरेर्विश्वस्योक्तमित्यनेकलक्षणोक्त्युपयोगः ।

वा०— संभवे व्यभिचारे च विशेषणमर्थवदिति । यद्विशेषणं लक्ष्यमात्रे संभवतीत्यव्याप्त्यसंभवव्यावर्तकत्वसूचनं, यदनुपादाने व्यभिचार इत्यतिव्याप्तिव्यावर्तकत्वसूचनमिति भावः ॥ अत्र भाष्यकारीयज्ञापकस्यास्पष्टत्वात्स्वयमेवाह अत्रेति । अत्रापि पूर्ववदेवाप्रयोजकत्वशङ्कानिरासाय पीठिकावचनं जिज्ञास्येति । अत्रासमासकरणेन न केवलं प्रत्येकलक्षणत्वसूचनं किन्तु तदुपपादनप्रकारस्यापीत्याशयेनोपपादकांशो क्वचित्सृष्टिः क्वचित्स्थितिरित्युक्तम् ।

स०— संभवे व्यभिचारे चेति । यद्धर्मपुरस्कारेण विशेष्यमुपात्तं तद्धर्मवति कुत्रचिदसंभवः उपात्ते तु संभवश्चेत् तर्हि सार्थकमित्यर्थः । नीलमुत्पलमिति यथा ।

प०— नन्वथापि 'सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यत' इतिभाष्योक्तिवदत्राप्यभाष्ये तथैव वक्तव्येऽसमासेन निर्देशो निर्बीज इत्यतः तदनुरोधेनान्यथाप्यवतार्य तात्पर्यमाह ननु सृष्टयादीत्यादिना ॥ संभवे व्यभिचारे चेति । पीतःशङ्ख इति विशेषणं नोपादेयम्, असंभवात् । अतो यद्विशेषणं संभवति, यदभावे च व्यभिचारः अलक्ष्ये वृत्तिः पूर्वतनस्य, तद्विशेषणम् तत्रार्थवदितीह विवक्षितार्थो ध्येयः । इत्यनेकलक्षणोक्त्युपयोग इति ॥ एतच्चोपलक्षणम् । आद्यपद्यव्याख्यानावसरोक्तदिशा विभवार्थोऽनेकलक्षणोक्तिरित्यपि ज्ञेयम् ।

चा०— संभवे व्यभिचारे चेति । यस्य विशेषणस्य विशेष्ये संभवस्तत्सजातीये व्यभिचारो व्यतिरेकश्च तदेव विशेषणं सजातीयव्यावर्तकतया सार्थकमिति भावः । यथा नीलोत्पलमित्यादौ नील्यादि । प्रकृते च न जन्मादिकर्तृत्वेन सजातीये क्वचित्स्थित्यादिकर्तृत्वव्यतिरेकोऽस्ति । येन तद्व्यावर्तकतया स्थित्यादिकर्तृत्वं सार्थकं स्यादित्यर्थः । यद्वा यस्य विशेषणस्य विशेष्ये संभवः, व्यतिरेके च विशेष्यनिष्ठधर्मस्य व्यभिचारोऽतिव्याप्तिः तदेव विशेषणं सार्थकमित्यर्थः ।

च०— संभवे व्यभिचारे चेति । यादृशलक्षणवाक्यघटकपदबोध्यस्य विशेषणस्य प्रकृतलक्ष्यतावच्छेदकाभिमतधर्मावच्छेदेनावस्थितिः प्रकृतलक्ष्यतावच्छेदकाभिमतधर्मव्यापकधर्मपुरस्कारेण प्रकृतलक्ष्यसजातीये व्यभिचारो व्यतिरेकश्च तद्विशेषणमव्याप्त्यादिदोषत्रयव्युदासाख्यफलवदित्यर्थः । अत्र च संभवपदेनाव्याप्त्यसंभवव्यावृत्तिर्ध्वन्यते । व्यभिचारपदेन चातिप्रसङ्गनिरास इति ध्येयम् ।

सु० — अथवा '' 'तद्विजिज्ञासस्व तद्ब्रह्म' इति जिज्ञास्ये वस्तुनि ब्रह्मशब्दश्रवणात्तेन समस्तगुणपूर्णता(त्वा)भिधानाज्जीवस्य (च) तदभावाज्जिज्ञास्यं वस्तु जीवातिरिक्तमिति पूर्वह ाहितम् । तत्र सन्देहः तद्ब्रह्मेत्ययं ब्रह्मशब्दः किं प्रसिद्धार्थपर उतार्थान्तरपर इति हि ब्रह्मशब्दो गुणपूर्तिवाचीत्येतावता सर्वत्र तत्परो भवति, शक्तितात्पर्ययोरन्यत्रा ात् । तद्यदि ब्रह्मशब्दोऽयं प्रतीतार्थो न स्यात् तदैव (ए)तस्य गुणपूर्णतापरत्वं संभवतीत्यर्थ ायं विचारः । तत्र प्रसिद्धार्थ(पर) एवायं ब्रह्मशब्द इति पूर्वः पक्षः; लाघवात् । जीः स्वरूपतः प्रसिद्धः तत्र ब्रह्मशब्दस्य शक्तिरप्यभिधानादि(ना)तः प्रसिद्धा (सिद्धा) ; तात्पर्यं कल्प्यम् । तच्च शक्तिवशादेव प्रतीते त्यागकारणाभावादेव सिद्धम् । जात्यादिः ने प्रसिद्धम् तथाऽपि तस्य सुप्रसिद्धत्वेन तद्विजिज्ञासस्वेति जिज्ञास्यत्वानुपपत्तेः परित्यागः ासनस्या(पि )प्रसिद्धत्वेऽपि न तस्य जिज्ञास्यत्वम् प्रयोजनाभावात् । भावेऽपि पासनायत्तत्वात् । उपासनायाश्चारोपितरूपेणापि संभवात् । जीवस्य स्वरूपत द्धत्वेऽपि देहादितोऽतिविविक्ततया न प्रसिद्धिः ॥ अप्रसिद्धार्थत्वे तु तस्यार्थस्य चेतायाः, तत्र तात्पर्यस्य च कल्प्यत्वाद्गौरवम् ॥ अतो जीवपर एवायं ब्रह्मशब्दः ॥' प्राप्ते 'जन्माद्यस्य (यतः)' इति प्रतिविहितं सूत्रकारेण । अनेन कथमुक्ताशङ्कापरिहारो इत्याशङ्क्याह सृष्टिरिति ।

ासु श्रुतिषु जिज्ञासाविधात्रीषु 'तद्विजिज्ञासस्व तद्ब्रह्म' 'य आत्मा सोऽन्वेष्टव्यः' इत्याद्यासु ाद्ब्रह्मात्मादिशब्दवाच्यात् विश्वस्य सृष्ट्यादिकं भवतीत्युच्यते, 'यतो वा इमानि भूतानि ' इत्यादिपूर्वोत्तरवाक्यैः । सृष्ट्यादयश्च विश्वस्यासु श्रुतिषु भाष्योदाहृतासु हरेरेवोक्ताः । ते) जीवे संभवन्ति । अतः प्रसिद्धार्थे बाधकसद्भावात् तद्ब्रह्मेत्यादिब्रह्मादिशब्दोऽलौकिकस्य प्रतिपादको न जीवस्य, इति युक्तं तस्य तेन गुणपूर्णत्वाभिधानमित्यभिप्रायः सूत्रकारस्य; ावः ॥

वा० — तत्तदुचिततयाऽऽसु श्रुतिष्वित्यादेः सर्वशेषत्वेनान्वयेऽपि तत्तदंशसूचिततत्तच्छङ्का-परत्वेनैषां प्रकाराणां मिलितानां निष्कृष्टसूत्रतात्पर्यप्रतिपादकत्वेन पक्षान्तरत्वाभाववन्नोत्तरयोजनाया ोषसूचितत्वं किन्तु विशिष्टस्यापि पूर्वपक्षनिरासकत्वेन पक्षान्तरत्वमेवेत्याशयेनाह अथवेति ॥ ारणेनास्याक्षेपिकी सङ्गतिरिति दर्शयन्पूर्वाधिकरणतात्पर्यमाह तद्विजिज्ञासस्वेति ॥

ननु योगेन ब्रह्मशब्दस्य गुणपूर्तिवाचितायाः प्रदर्शितत्वेन तस्यार्थान्तरपरतायाः सिद्धत्वान्नेत्थं इति व्यर्थोऽयं विचार इत्यत आह न हीति । योगेनेति शेषः । अप्रसिद्धार्थपरत्वसंभवेऽपीति

च । सर्वत्रेति त्वेकत्रापि न तत्परत्वं किमु सर्वत्रेति कैमुत्यसूचनायेति ज्ञेयम् । प्रसिद्धार्थपरत्वसं
योगेनालौकिकार्थवाचित्वं संभवतीत्येतावताऽलौकिकार्थपरत्वं न हि क्वापि दृष्टं घटादिशब्दानाम
किकार्थपरत्वापत्तेरित्याशयः ॥ तद्वाचित्वात्तत्र तात्पर्यमिति च शक्तितात्पर्ययोरेकत्वाद्वोच्यते शक्तेस्त
विनाभावाद्वा । नोभयथाऽपीत्याह **शक्तीति** । अन्यत्वाद्भिन्नत्वात् । शक्त्या लक्षणादिन
प्रतिपादकत्वरूपत्वात्तात्पर्यस्येति भावः । अन्यत्वादित्यस्य शक्तेस्तात्पर्येण विनाऽपि सत्त्वादित्यप
गङ्गाशब्दस्य प्रवाहे शक्तावपि गङ्गायां घोष इत्यत्र तदप्रतिपादकत्वेन व्यभिचारादिति भावः ॥
स्वर्गापूर्वादिपदानामप्यलौकिकार्थपरत्वाभावेन तदसिद्धिरेव स्यादित्यतस्तत्र प्रसिद्धार्थासंभवेन
पदानर्थक्यासंभवेनालौकिकार्थपरत्ववदत्रापि प्रसिद्धार्थासंभव एवाप्रसिद्धार्थत्वं कल्पनीयमिति प्रसि
संभवव्युत्पादनपर्यन्तं सन्देहानिवृत्त्या विचारसार्थक्यमेवेत्याह **तद्यदीति** । एवञ्च तद्ब्रह्मेत्ययमिति नि
**निर्देशस्तस्य प्रस्तुतत्वाभिप्रायेण न तु प्रयोगान्तरे तस्यार्थान्तरपरत्वाङ्गीकाराभिप्रायेण** । ए
नैतद्वाक्यानां पूर्वपक्षविरोधः । पूर्वपक्षीयायास्तद्वाचितायाः कल्प्यत्वोक्तिस्तु रूढेरभावाद्देशकाल
परिच्छेदरूपवृद्ध्यर्थबृहतेर्निष्पन्नस्य ब्रह्मशब्दस्य गुणपूर्तेरेवाप्रसिद्धत्वेन अयोग्यतया वा 'अथ कस्मात
गुणशब्दस्य देशापरिच्छेदादिपरत्वेनाप्युपपत्तेः श्रुतिबलाद्वा तदर्थत्वासिद्धेरेति द्रष्टव्यम् ।

यद्वा योगेन गुणपूर्तिवाचितायाः प्रतिपादितत्वेनार्थान्तरपरत्वस्य निर्णीतत्वान्न सन्देह
शङ्काया उक्तरीत्या तद्वाचित्व एव विप्रतिपत्तेरित्येवोत्तरमभिप्रेतम् । तथा च सन्देहादर्थवानेव वि
ब्रह्मशब्दस्य तद्वाचित्वमन्यत्रार्थान्तरपरत्वं चाङ्गीकृत्यापि न तद्वाचकत्वादिमात्रेण सर्वत्र तत्परत्व
रित्यतोऽपि विचारसार्थक्यमेवेत्याह **न हीति** ॥ अथ यथाश्रुतमेव सर्वम् । यदि न तद्वाचित
तत्परत्वसिद्धिः कथं तर्हि तत्सिद्धिरित्यत आह **तद्यदीति** । एवं च पूर्वपक्षप्रवृत्तिरभिप्रेतोत्तराभिप्र
त्वङ्गीकारवादाभिप्रायेण । तत्त्वप्रकाशिकायां तु तद्वाचित्वाद्यभ्युपगमेनैव पूर्वपक्षः प्रदर्शितः
एव न्यायविवरणटीकायां पक्षद्वयमपि प्रदर्शितमिति ध्येयम् ।

यद्वा । सन्देहावसरे सन्देहबीजत्वेन सिद्धान्त्यभिमतगुणपूर्तिवाचित्वं, क्वचित्तत्परत्वाङ्गी
पूर्वपक्षस्य सिद्धान्त्यभिमतोन्मूलनेन प्रवृत्तेस्तत्र तद्वाचित्वादेः कल्प्यत्वोक्तिरुपपन्नेति द्रष्ट
चन्द्रिकायां तु 'ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेत्यतो व
सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किन्तु तात्पर्यसन्देह एव
हर्तुमेतद्वाक्यमत एव सन्देहावसर एव कृतम्' इत्युक्त्वा 'जीवे संभवद्गुणपूर्तेर्ब्रह्म[illegible]प्रवृत्तिनिमि
कारेण पूर्वपक्षप्रवृत्तिर्वा' इति पक्षान्तरमुक्तम् ।

जीव एवायमिति न्यायविवरणीयावधारणानुसारेण परिशेषं दर्शयितुं प्रसक्तं प्रतिषेधति **जा दिकमिति** । आदिपदेन शब्दराशिग्रहणम् । तस्येत्युपलक्षणम् । तत्प्रामाण्यादेश्चेत्यपि द्रष्टव्य तुशब्देन लोकतः शास्त्रान्तरतश्च प्रसिद्धिं सूचयति ॥ **जीवस्येति** । एवंच जिज्ञासामात्रानाक्षे सिद्धान्त्यभिमतजिज्ञासाक्षेपेण पूर्वपक्ष इत्याशयः । न च शक्त्यभावेऽपि लक्षणादिना तात्पर्यसं त्सिद्धान्तिनं प्रति शक्तेः कल्प्यत्वोक्तिरयुक्तेति वाच्यम्, लक्ष्येऽर्थे योगासंभवेन तदधीनगुणपूर्त्यर्ि सिद्धान्तिना लक्षणादेर्वक्तुमशक्यत्वात् ॥

**अत इति** । एवंच यत्र दुःखेन संभिन्नमित्यादिरूपबाधकवशात्स्रक्चन्दनादिरूपप्रसिद्धार्थ त्यागेन स्वर्गपदादेरप्रसिद्धार्थकल्पनावत्प्रकृतेऽपि वाक्यशेषोक्तबाधकवशात्प्रसिद्धार्थपरित्यागेनाप्रसिद्ध कल्पनं युक्तमिति भावः ।

स०— ननु गुणपूर्तिवाचकस्यास्य ब्रह्मशब्दस्य कथं प्रसिद्धाल्पगुणजीवपरत्वसन्देहो यु इत्यत आह **न हि ब्रह्मशब्द इति** । नन्वेवं क्वचिद्ब्रह्मशब्दस्य गुणपूर्णवस्तुवाचकत्वे पूर्वपक्षिणाङ्गी तस्यार्थस्य कल्प्यत्वात्कल्पनागौरवमिति वक्ष्यमाणगौरवं कथं घटत इति चेत् । उच्यते । वेदान्तर्ै ह्यत्र पूर्वपक्षः । तथाच व्यवहारदशायां च यत्र 'तदेव ब्रह्म परमं कवीनाम्'इत्यादौ समुद्रान्तस्थितत्व लिङ्गबलाद्गुणपूर्णवस्तु ब्रह्मशब्दात् प्रतीयते तत्र प्रतीयतां नाम । प्रकृते बाधकाभावात् । अत तद्ब्रह्मेत्ययं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः । पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतमिदम् । परमार्थ न प्रसिद्धजीवव्यतिरिक्तं ब्रह्मास्ति प्रमाणाभावात् । सर्वस्य वेदान्तस्याखण्डचिन्मात्रपरत्वात् अतस्तत्क कल्पनागौरवमेवेत्याशयात् । चन्द्रिकायां तु "अयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः, पूर्व जिज्ञासाक्षेपेण सङ्गतिं दर्शयितुमेव । न तु क्वचिद्ब्रह्मशब्दस्य विष्णुवाचित्वाङ्गीकारेण पूर्वपक्ष दर्शयितुम् । तथात्वे सिद्धान्तिनं प्रति अर्थादेः कल्प्यत्वोक्तेरनुपपत्तेः । तथा चात्र पूर्वपक्षे स ब्रह्मशब्दस्य न विष्णुपरत्वमित्येव विवक्षितम्, न तु तद्ब्रह्मेति वाक्यगतब्रह्मशब्दस्यैव । 'न हि ब्र शब्द' इति वाक्यं तु क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं; किन्तु 'ब्रह्मशब्दो गुणपूर्तिवाची न इत्येव सन्दिह्यतां किं तात्पर्यसन्देहेन' इति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिध्या विवक्षितार्था नेत्थं सन्देहः, किन्तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम्; अत एवैतद्वाक्यं सन्देहावसर कृतम्" इत्युक्तम् ॥ ननु शक्तितात्पर्ययोरेकत्वात् शक्तिसिद्धौ तात्पर्यस्यापि सिध्या कथं विवक्षिता सिद्धिरित्यत आह **शक्तितात्पर्ययोरन्यत्रापि सत्त्वादिति** ।

**उपासनायाश्चेति** । तथा च न वस्तुतत्त्वव्यवस्थापिकया जिज्ञासया कृत्यमिति वाक्यशेषः जीवस्य तु देहातिरिक्ततया विचार्यतयैव जिज्ञासा । न तूपासनं, स्वस्य स्वयं उपासनाऽयोगादिति भाव

न चैवं जिज्ञासाक्षेपो, जीवस्यैव तद्विषयत्वसंभवादिति वाच्यं, विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मि पूर्णत्वप्रकारकपूर्वसूत्रोक्तजिज्ञासाक्षेपोपपत्तेः इति भावः । यद्वा देहाद्यन्यतया जीवस्य जिज्ञासामङ्गीः सिद्धान्त्यभिमतजिज्ञासाक्षेप इति द्रष्टव्यम् ॥ **तद्वाचिताया इति** । न च सिद्धान्ते लक्षणादि तात्पर्यसंभवात्तद्वाचितायाः कल्प्यत्वोक्तिरयुक्तेति वाच्यम् । लक्ष्येऽर्थे योगासंभवेन तदधीनगुणपू लाभेन वाच्यतायाः सिद्धान्तिभिरवश्यं वाच्यत्वात् । न चावयवशक्तेः क्लृप्तत्वेन कल्प्यत्वोक्तिरयुक्त गुणपूर्तेरेवाभावेन तत्र बृहतेः शक्त्यक्लृप्तेरिति भावः ।

**अलौकिकस्य हरेरेवेति** । 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं सुखं स्वर्गपदास्पदम् ॥' इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थत्यागेन अप्रसिद्धार्थपरत्व ब्रह्मशब्दस्यापि यतो वेत्यादिवाक्यशेषात् प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति भावः ॥ **तेनेति** । तस्य हरेः तेन ब्रह्मशब्देनेत्यर्थः । न च विष्णोरपि उपासनासाध्यत्वात् उपासनाय अविद्यमानार्थविषयत्वात् किं विद्यमानचर्चारूपविचारेणेति वाच्यम्, उपासनाया अविद्यमानार्थविष विद्यमानार्थविषयकश्रवणमननजन्यत्वायोगेन तत्समानार्थकायास्तस्या विद्यमानार्थविषयत्वावश्यंभावात्

प०— नन्वेवं सृष्टिरित्यादेरुक्तव्याख्यानत्रयेऽपि 'जन्माद्यस्य यतः' इतिसूत्रं श्रुत्यन्तरप्रसि नेकलक्षणोक्तिपरमिति व्याख्यातं स्यात् । न च तद्युक्तम्, तथात्वे न्यायेन वेदार्थविषयकसंशयविप निरासपूर्वं तन्निर्णयरूपोपकाराजनकत्वेनागमवद्बोधकतापत्त्या वेदेतिकर्तव्यतारूपन्यायसूत्रत्वभङ्ग इ योजनान्तरमप्याह **अथवेति** ॥ यद्वा 'इत्यनेकलक्षणोक्त्युपयोगः' इत्ययुक्तम् । स्वेतरसर्वव्यावृत्त जिज्ञास्यवस्तुनोऽवधारणाय हि लक्षणकथनम् । तच्चैकत्र श्रुतौ उक्तैकलक्षणोक्त्यापि संभवतीत्यतो, जिज्ञासाविधायकनानावाक्येषु जिज्ञास्यस्य जीवत्वेन तदन्यपरत्वाभावशङ्कायां तत्र तत्र वाक्ये जिज्ञा सामानाधिकरण्येन कचित्सृष्टिः कचित्स्थितिरित्येवं जीवव्यावर्तकधर्माणाम् अष्टानां श्रवणात्तन्मध्ये तमस्यानुपादाने तद्धर्मोपेतवाक्ये जिज्ञास्यस्य जीवान्यत्वासिद्धेः सर्वोपादानं सार्थकमिति भावेन योज न्तरमाह **अथवेति** ॥

**तद्ब्रह्मेत्ययं ब्रह्मशब्द इति** । वैदिकब्रह्मशब्दमात्रस्यात्र संशयधर्मित्वम् । तद्ब्रह्मेत्यया विशिष्य संशयधर्म्युक्तिः पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुमेव न तु तत्रैव सन्देह अन्यत्र विष्णुवाचित्वा(भावा)भ्युपगमोऽस्तीति न भ्रमितव्यम् । तथैव चन्द्रिकोक्तेः । अन्यथा धर्मिक नोक्तिपरोत्तरग्रन्थविरोधात् ॥ **प्रसिद्धार्थेति** । जीवपर इत्यर्थः ॥ ननु ब्रह्मशब्दः गुणपूर्तिवाची नवे संदिह्यतां किं तात्पर्यसन्देहेनेत्यत आह **न हीति** । वाचकत्वसिद्धावपि तात्पर्यासिद्ध्या तात्पर्यको सन्देह एव दर्शनीय इति भावः ॥ **अन्यत्रापीति** । परस्परपरिहारेणापि सत्त्वादित्यर्थः ॥ **आरो**

ति । तथाच तत्त्वपरे शास्त्रे न तस्य विचार्यतेति भावः ॥ जीवपक्षे कथं जिज्ञासोपपत्तिः तस्याप्य
सिद्धत्वात् । 'जातमात्रा मृगा गाव' इत्यादिना भक्तिपादे 'देहादन्योऽनुभवत आत्मा भाति' इत्यादि
नयपादे च वक्ष्यमाणदिशा देहादिविविक्तत्वेनापि सिद्धत्वात्; इत्यत आह जीवस्येति ॥ सिद्धान्तको
धकमाह अप्रसिद्धार्थत्वे त्विति ॥ तद्वाचिताया इति । वाचित्वाभावेपि लक्षणया तात्पर्यसंभवे
द्धान्तिना लक्षणानङ्गीकारात्तद्वाचिताया अपि कल्प्यत्वोक्तिः ।

य आत्मेति । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपा
यकामः सत्यसङ्कल्पः सोन्वेष्टव्यः स विजिज्ञासितव्य' इति छान्दोग्याष्टमाध्यायगतवाक्यम
ात्मादिशब्दवाच्यादित्यनन्तरं हरेरिति मूलपदं योज्यम् । अस्येत्यध्याहृतस्यार्थो विश्वस्येति
युच्यत इत्ययुक्तम् तद्विजिज्ञासस्वेत्याद्युपात्तवाक्येऽनुपलम्भादित्यत आह इत्यादिपूर्वोत्तरवाक
ति ॥ तद्विजिज्ञासस्वेत्यस्य यतो वा इत्यादिपूर्ववाक्यम् । य आत्मेत्यस्य तु अपहतपाप्मेत्याद्युत्त
क्यम् । तत्र च 'अपहतः पाप्मा यस्मात्' इत्यादिबहुव्रीह्युपगमेन मोक्षो हरेर्भवतीत्येतज्ज्ञेयम् ।
स्यन्तरेऽपि ध्येयम् । तावता जिज्ञास्यं जीवान्यत्कुतः जीव एव कुतो नेत्यतो योजनाऽन्तरम
ष्ट्याद्यश्चेति ॥ भाष्येति । य उ त्रिधात्वित्यादिश्रुतिष्वित्यर्थः । हरेस्सदेत्यन्वये लब्धार्थम
रेरेवेति । हरेरितीदानीं षष्ठ्यन्तं बोध्यम् । हिशब्दस्य यस्मादिति हेत्वर्थकत्वबलेन लब्धार्थम
त इति । तस्यैवार्थः प्रसिद्धार्थे बाधकसद्भावात् इति । अलौकिकस्येति विभागः । एतेनास्तु विच
धात्रीषु श्रुतिसूक्तास्तद्ब्रह्मेत्यादिशब्दाः हरेस्सदा वाचका इत्यपि मूलयोजना सूचिता ।

**या०**— ननु ब्रह्मशब्दस्य 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या गुणपू
चकतया पूर्वमुक्तत्वात्कथमल्पगुणजीवपरत्वकोटिसन्देहहेतुको विचारो युज्यत इत्यत आह न
ह्मशब्द इति । सत्यं ब्रह्मशब्दो गुणपूर्तिवाची तथाऽपि, सर्वत्र प्रसिद्धार्थेऽपि, न समस्तगुणपूर्तिपरः
: त्वप्रसिद्धार्थ एव । प्रसिद्धार्थे तु विवक्षिते संभवद्गुणपूर्तिपर एव भविष्यति । अतो युक्तः सं
याशयः । एतेन सर्वत्रेति वचनेन कचिद्ब्रह्मशब्दस्य समस्तगुणपूर्णवस्तुघाचिताङ्गीकारावगमात्तस्यार्थ
ल्प्यत्वादिति वक्ष्यमाणं कल्पनागौरवमेतद्वाक्यार्थेन विरुद्धमिति शङ्का निरस्ता । सर्वत्रेत्यस्य सं
ह्मशब्दोपेतेषु वाक्येष्वित्यर्थकत्वे हि तथा स्यात् । न चैवं किन्तु प्रसिद्धाप्रसिद्धार्थयोरित्यर्थकत्व
दर्शितत्वात् । एतदेव दर्शयति तद्यदीति ॥ प्रसिद्धार्थपर एवायमिति ॥ ननु वक्ष्यमाणकल्पन
ारवेण ब्रह्मशब्दस्य कुत्राप्यसिद्धार्थपरत्वं नास्तीति पूर्वपक्ष्याशयावगमात्कथमेवं विशिष्य पूर्वपक्षोपक्र
हरिति चेत् । उच्यते । पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुं तावदयं ब्रह्मशब्द इति विशि
शयधर्मिनिर्देशः कार्यः । अन्यथा सङ्गतेर्दर्शयितुमशक्यत्वात् । तदनुसारेणैव पूर्वपक्षोपक्रमोपसंहारा

ध्योक्ताविति न क्वाऽप्यनुपपत्तिः । चन्द्रिकायां तु न हि ब्रह्मशब्द इति वाक्यं क्वचिद्गुणपूर्ति-
ताङ्गीकारेण न प्रवृत्तं किन्तु ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्ये सन्देहेनेति
यां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किन्तु तात्पर्यसन्देह एव
ाय इति परिहर्तुमत एवैतद्वाक्यं सन्देहावसर एव कृतमित्युक्तम् ॥ **अप्रसिद्धत्वेऽपीति** । तस्य
नातीन्द्रियत्वादिति भावः ॥ **उपासनायाश्चेति** । तथा च न वस्तुतत्त्वव्यवस्थापकया तज्जिज्ञासया
मेति भावः ॥ **न प्रसिद्धिरिति** । तथा च तद्विजिज्ञासस्वेत्यत्र जीवस्यैव देहाद्यन्यतया जिज्ञा-
वेध्यङ्गीकारात् न पूर्वसूत्रोक्ता सिद्धान्त्यभिमता जीवातिरिक्तब्रह्मजिज्ञासाक्षेपे युक्तेति निरस्तम् ॥
**चेताया इति** । लक्षणादिना तात्पर्योक्तौ गुणपूर्त्यलाभेन, योगेन वाच्यताया सिद्धान्तिनाऽवश्यं
त्वादिति भावः ॥

**अलौकिकस्य हरेरेवेति** । 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च
स्वर्गपदास्पदम् ॥' इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थत्यागेनाप्रसिद्धार्थपरत्ववद्ब्रह्मशब्द-
यतोवेत्यादिवाक्यशेषात्प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति भावः ॥

**श्री० — जीवो हीति** । धर्मिकल्पनातो धर्मकल्पना लघीयसीति भावः ॥ ननु ब्रह्मशब्दस्य
द्रजीवभिन्नार्थान्तरपरत्वं किं न स्यादित्याशङ्क्य तत्र बाधकमाह **अप्रसिद्धार्थत्वे त्विति** ॥

**च० — अर्थान्तरपर इतीति** । श्रीतब्रह्मशब्दधर्मिकजीवतात्पर्यकत्वार्थान्तरतात्पर्यकत्वकोटिक-
ह इत्यर्थः ।

ननु ब्रह्मशब्दस्य गुणपूर्त्यभिधायकतायाः प्रागभिहिततया तस्यार्थान्तरतात्पर्यकत्वावधृत्या
त्रिनिर्मुक्तजीवतात्पर्यकत्वकोटिकसन्देहस्यैवानवतारेण कथं तन्निबन्धनो विचारः सङ्गच्छत
शङ्कायामाह **न हि ब्रह्मशब्द इति** । अवयववृत्त्या अप्रसिद्धार्थपरत्वसंभवेऽपीति पूरणीयम् ।
च फक्किका पूर्ववादिनो ब्रह्मशब्दस्य काचित्कगुणपूर्त्यभिधायकत्वोरीकारेण नैव प्रवर्तृते । तथा सति
ार्थस्य, तद्वाचितायाः, तत्र तात्पर्यस्य च कल्प्यत्वादित्युत्तरग्रन्थासाङ्गत्यप्रसङ्गात् । किन्तु यथा
कर्णादिशब्दा अवयववृत्त्याऽर्थविशेषवाचकत्वेन केनचिदङ्गीकृता इत्येतावता प्रसिद्धार्थतात्पर्यकत्व-
त्रे योगेन तद्वाचकता न सेत्स्यति तेषां, तद्वत् सिद्धान्तिना ब्रह्मशब्दस्यावयववृत्त्या अलौकिकार्थ-
कतायामूरीकृतायामपि तादृशालौकिकार्थतात्पर्यकताप्रसिद्धार्थपरत्वसंभवे न सेत्स्यत्येव तस्य, अन्यथा
तातिप्रसङ्गस्य दुर्वारत्वात्; इति संभवद्गुणपूर्त्यवच्छिन्नतात्पर्यकतैवोपेयेति तादृशसन्देहस्यानन्तरायतया
बन्धनोयं विचारः सङ्गच्छत एवेत्याशयः । इत्थं च दर्शिता गुरुपादोक्तसरणिः ॥ सर्वत्रेति तु एकत्रापि
त्परत्वम् किमु सर्वत्रेति कैमुत्यसूचनायेति ज्ञेयम् । प्रसिद्धार्थसंभवेऽपि योगेनालौकिकार्थवाचित्वं

प्रभवतीत्येतावता अलौकिकार्थपरत्वं न हि क्वापि दृष्टम् । घटादिशब्दानामप्यलौकिकार्थपरत्वापत्तेरि इति वाक्यार्थचन्द्रिकाकृताम् ॥ चन्द्रिकाकृतां च 'इदं वाक्यं कचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पय विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किं तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुमत एवैतद्वाक्यं हावसरे कृत'मिति निरूढं पन्थानमनुरुन्धानेत्यवसेयम् ॥ अत्र व्याचक्षाणाः ''ननु ब्रह्मशब्दस्याथ व च्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इति श्रुत्या गुणपूर्तिवाचकतायाः पूर्वमुक्तत्वात् कथमल्पगुणजीव कोटिकसंदेहहेतुको विचारो युज्यत इत्यत आह **न हि ब्रह्मशब्द** (इति) इत्यवतार्य; सत्यं ब्रह्मशब्दं पूर्तिवाचीति तथापि सर्वत्र प्रसिद्धार्थेऽपि न समस्तगुणपूर्तिपरः किं त्वप्रसिद्धार्थ एव । प्रसिद्ध विवक्षिते संभवद्गुणपूर्तिपर एव भविष्यति । अतो युक्तः संशय इत्याशयः । एतेन सर्वत्रेति कचिद्ब्रह्मशब्दस्य समस्तगुणपूर्णवस्तुवाचिताङ्गीकारावगमात्तस्यार्थस्य कल्प्यत्वादिति वक्ष्यमाणं क गौरवमेतद्वाक्यार्थेन विरुद्धमिति शङ्का निरस्ता । सर्वत्रेत्यस्य सर्वेषु ब्रह्मशब्दोपेतेषु वाक्येष्वित्यर्थक तथा स्यात् । न चैवं किं तु प्रसिद्धाप्रसिद्धार्थयोरित्यर्थकत्वस्य प्रदर्शितत्वात् । एतदेव दर्शयति **तद्वदं प्रसिद्धार्थपर एवायमिति** । ननु वक्ष्यमाणकल्पनागौरवेण ब्रह्मशब्दस्य कुत्राप्यप्रसिद्धाः नास्तीति पूर्वपक्षस्याशयावगमात्कथमेवं विशिष्य पूर्वपक्षोपक्रम इति चेन्न । उच्यते । पूर्वोक्तजिज्ञास क्षेपेण सङ्गतिं दर्शयितुं, न तावदयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः कार्यः; अन्यथा सङ्गतं यितुमशक्यत्वात् तदनुसारेणैव पूर्वपक्षोपक्रमोपसंहारौ विशिष्योक्ताविति न काऽप्यनुपपत्तिः । चन्द्रि तु न हि ब्रह्मशब्द इति वाक्यं कचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किं तु ब्रह्मशब्दो गुणपूर्तिवा वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिध्या विवक्षितार्था नेत्थं सन्देहः, किं तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम् । अत एवैतद्वाक्यं सन्देहावसर एव कृ त्युक्तम्'' । इति व्याचक्षते ।

**अप्रसिद्धत्वेऽपीति** । तस्य देवत्वेनातीन्द्रियत्वादिति हृदयम् ॥ तस्येति प्रयोजनपराम पूर्वोत्तराभ्यां तन्त्रावृत्त्याद्याश्रयणेनान्वेति ॥ **उपासनायाश्चेति** । अर्थपारमार्थ्यावगमिका जिः मन्दप्रयोजनेति भावः ॥ **न प्रसिद्धिरिति** । तथाच देहाद्यन्यत्वोपगमेन जीवधर्मिकजिज्ञास एव तद्विजिज्ञासस्वेति वाक्यघटकविधिविहितत्वोपगत्या नोत्तरवाद्यभिमता जीवान्यत्वविशेषितब्रह्मधर्मा जिज्ञासा सङ्गच्छत इति पूर्ववादिमतप्रवृत्तिरिति भावः ॥ **तद्वाचिताया इति** । लक्ष्येऽर्थे ब्र तात्पर्यं स्वूपगमं तथापि तत्रावयववृत्त्यभावेन गुणपूर्त्यसिध्या लक्षणाया दुरुपगमत्वादिति भावः ।

**बाधकसद्भावादिति** । 'यन्न दुःखेन' इत्यादिवाक्यशेषोदीरितधर्मान्वयानुपपत्त्या स्वर्गशब्दस्य देरूपप्रसिद्धार्थानुपगमेनालौकिकार्थतात्पर्यकतेव प्रकृतेऽपि 'यतो वा' इति वाक्यशेषाभिहितधर्मान्वया- त्तेप्रसङ्गेन प्रसिद्धार्थपरित्यागेनाताहशार्थतात्पर्यकतैवोपेयेति भावः ॥

( इति लक्षणस्य लक्ष्यधर्मेणोपपादनम् । )

( अथ अतिव्याप्तिपरिहारः । )

**सु० — ननु कथं जगत्सृष्ट्यादिकारणत्वं हरेरेव स्यात्, यावता 'हिरण्यगर्भः र्तताग्रे', 'एको रुद्रो न द्वितीयाय तस्थे', 'इमाँल्लोकानीशत ईशनीभिः', 'ज्ञात्वा शिवं तमत्यन्तमेति' इत्यादिश्रुतिषु हिरण्यगर्भादीनां तत्प्रतीयते; इत्यत आह सृष्टिरिति । श्रुतिषु परेणोदाहृतासु हिरण्यगर्भ इत्याद्यास्वपि विश्वस्य सृष्ट्यादयो हरेरेवोक्ता न तु द्रादिभ्य इति न लक्षणस्यातिव्याप्तिरिति ।**

**तत्कथमित्यत आह** यं नामानीति ।

**अनु० —**　　यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि ॥
　　　　　श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥

**अनेन 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतिमुपादत्ते । अद्धेत्याङो- थनम् । 'यो देवानां नामधा एक एव' इत्यपि प्रसिद्धश्रुतेः नामानि सर्वाणि हिरण्यगर्भ दीनि, विष्णोरेव यतः, ततः, हिरण्यगर्भ इत्यादिषु श्रुतिषु विश्वस्य सृष्ट्यादयो हरेरेव इति पूर्वेण संबन्धः ।**

**वा० —** एतद्वाक्यसङ्गतत्वेनोत्तरवाक्यं योजयितुमतिव्याप्तिशङ्कापरिहारप्रतिज्ञापरत्वेनेदमेव वाक्यं ग्रति **नन्विति** । यावतेत्यस्य यत इत्यर्थः ।

श्रुतिगतस्य सर्वाणीत्यस्याङश्चानुपादानादर्थत उपादाने वक्तव्ये कस्येदमुपादानमिति न ज्ञायत ोऽव्ययत्वेनान्तरङ्गतयाऽव्यवधानाच्चाङ इदं ग्रहणमित्याह **अद्धेतीति** । पूर्वोक्तप्रतिज्ञोपपादकहेतु- रूपत्वमस्य दर्शयितुं पूर्वेण संबन्धमाह ॥ **तत इति** ।

**स० — यावतेति** । यत इत्यर्थः ।

**प० —** लक्षणानामतिव्याप्तिनिरासकत्वेनापि योजयति **ननु कथमित्यादिना** । यावतेति दित्यर्थे भिन्नक्रमतयाप्यपिपदान्वयमुपेत्याह **इत्याद्यास्वपीति** । हरेरेवेति पञ्चमी । ब्रह्मरुद्रादिभ्य प्रतियोगिनि पञ्चमीनिर्देशात् । 'इति ह्यपि । श्रुतेः' इत्यत्र हिशब्दार्थमाह **प्रसिद्धश्रुतेरिति** ॥

या०— प्रसिद्धश्रुतेरित्यत्र प्रसिद्धेति हिशब्दार्थकथनम् ॥

श्री०— द्वितीयायेति । द्वितीयतयाऽवस्थानायान्यो न तस्य इत्यर्थः । विभक्ति
द्वितीय इत्यर्थ इत्यप्याहुः ।

सु०— ननु यथा हिरण्यगर्भादिशब्दान्विष्णुविषयान्व्याख्याय हिरण्यगर्भ इ
श्रुतयो विष्णौ योज्यन्ते तथा विष्ण्वादिशब्दान्हिरण्यगर्भादौ व्याख्याय भाष्योदाहृताः श्
ऽन्यविषयतया कुतो न योज्यन्त इत्यत आह अत इति ।

अनु०— अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित् ॥

अतो 'नामानि विश्वाभि न सन्ति लोके' 'यो देवानां नामधा एक ए
प्रतिषेधात्, परमेश्वरादन्यस्य नामैव नास्ति । दूरे विष्ण्वादिनामेत्यर्थः ॥ नामाभावे व
विलोपादिप्रसज्यत इत्यत उक्तम् मुख्यत इति ।

वा०— अत इत्युदाहृतश्रुत्योराद्यश्रुत्यर्थपरामर्शे विवक्षितार्थासिद्धेस्तदुदाहरणसन्नि
पूर्ववाक्यार्थस्य द्वितीयश्रुताववधारणबललब्धार्थस्यायं परामर्श इत्याह अत इति ॥ सामान्या
कैमुत्यसूचनेन प्रकृतोपयोग इत्याह नामैवेति ॥

प०— भाष्योदाहृतेति । 'य उ त्रिधातु' इत्यादयः ॥ विश्वेति । विश्वानीत्यर्थः ।

( इति अतिव्याप्तिपरिहारः । )

( अथ असंभवपरिहारः । )

सु०— ननु तथाऽपि विष्णावसंभवीदं लक्षणम् । 'जनितोत विष्णोः' इत्याद
जन्मादिदोषश्रवणात् । न हि जन्मादिदोषवतोऽस्मदादेरिव जगज्जन्मादिकारणत्वं संभ
इत्यत आह गुणा इति ॥

अनु०— गुणाः श्रुता इति ह्यस्मान्न दोषोऽर्थः श्रुतेर्भवेत् ॥

''गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का । 
अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः ॥' इत्यस्माद्वाक्यात् 
र्जन्मादिदोषो 'जनितोत विष्णोः' इत्यादिश्रुतेरर्थो न भवेद्धि यस्मात्तस्मान्नासंभवीदं लक्ष

इदमुक्तं भवति । वाक्यार्थावगमे हि व्याख्यानं मुख्यकारणम्; यथाहुः 'व्य
नतो विशेषप्रतिपत्तिः' इति । तत्रापि यदीयं व्याख्येयं तदीयमेव चेद्व्याख्यानं तदा

ोऽर्थावगतिः । तत्र 'गुणाः श्रुताः' इति श्रुतिरेव सर्वश्रुतीर्व्याख्याति । सर्वाः श्रुतयो ष्णोरनन्तानलौकिकानेव गुणान्व(र्णय)दन्ति न कुत्रापि दोषान् । दोषवादप्रतीतिस्तु शब्द-क्तितात्पर्यापरिज्ञाननिमित्तैवेति ॥ एवं श्रुत्यैव सर्वासु श्रुतिषु व्याख्यातासु कथं तद्विरुद्धं-षपरतया व्याख्यानं युज्यते । तस्माद्विष्णुरिति यजमानस्य यज्ञस्य वा नाम । तौ सोमा-वत इति सोमो जनितोत विष्णोरित्युच्यत इत्यादि व्याख्येयमिति ।

वा०—ननु लक्षणातिव्याप्तिनिरासावसरे श्रुतेर्दोषपरत्वाभावव्युत्पादनमसङ्गतमित्यतो जन्माद्यस्ये-ासंहारभाष्ये एवकारप्रहाणेन योजनेऽसंभवपरिहारस्याप्यभिप्रेतत्वादसंभवपरिहाराय दोषश्रुतेर्गतिकथनं ङ्गतमित्याशयेनोत्तरवाक्यमवतारयति । नन्विति ॥

ननु 'गुणाः श्रुताः' इत्यनुसारेण दोषश्रुतेः स्वार्थप्रहाणे न किञ्चिन्नियामकं वैपरीत्यस्यापि वात् । न च व्याख्यानरूपत्वमेव तथेति वाच्यम् । व्याख्यानानुसारेणार्थकथनस्यापि नियामकशून्य-दन्यथाव्याख्यानस्यापि संभवाच्च । कथं चास्य दोषवचनव्याख्यानरूपत्वम् । तदनुसारेणास्याः स्वार्थ-ाणे निर्विषयत्वापत्त्याऽप्रामाण्यापत्तिश्चेत्यत आह इदमुक्तं भवतीति ॥ अत्र परिभाषां प्रमाणयति ाऽऽहुरिति । 'एकशतं षष्ठ्यर्थाः'इति 'अस्तेर्भूः'इत्यादौ यत्रानेकेषां योगानां प्रसक्तिस्तत्र स्थाने ो ग्राह्येति नियमार्थं प्रवृत्ते 'षष्ठी स्थानेयोगा'इति सूत्रे (स्थानेन योगो यस्या इति विग्रहः । निपातना-म् ) स्थान इत्युक्तेऽप्यनन्तरे वा समीपे वेति सन्देहात्तन्निवृत्तये 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि देहादलक्षणम्'इति भाष्यकारेणोक्तम् । व्याख्यानेन विशेषप्रतिपत्तिरर्थविशेषनिश्चयो भवत्येव न तु देहालक्षणाभावः । एवं 'स्थान इति व्याख्यास्यामः'ततश्चार्थनिश्चय इति भाष्यकृता व्याख्यानस्यार्था-तिहेतुताया उक्तत्वादिति भावः ॥ अन्यथाव्याख्यानसंभवं शङ्कितं निराचष्टे तत्रापीति ॥ श्रुता ताश्चेत्येतत्तात्पर्यकथनम् अनन्तानिति ॥ सुविरुद्धा इत्येतत्तात्पर्यकथनम् अलौकिकानिति । लोक-ा विरुद्धानित्यर्थः । श्रुता इत्यस्य सङ्कोचकाभावात्सर्वपरत्वमभिप्रेत्य सर्वाः श्रुतय इत्युक्तम् ॥ श्रुताश्च ा न सन्तीत्युक्ते श्रुतानां कथमसत्त्वमित्यतोऽर्हि तथा प्रतीताः श्रुत्युक्ततया प्रतीता इत्येव । न तु ुतः श्रुतयो दोषान्वदन्तीति स्वयमेव व्याख्यानात्तदनुसारेण दोषाः श्रुता न सन्तीत्यस्य श्रुतयो दोषान्नैव न्तीति व्याख्याने आवश्यके तत्प्रायपाठाच्छ्रुता गुणाः सन्तीत्यस्यापि श्रुतयो गुणान्वदन्तीति ख्यानं कृतम् । नैवात्र शङ्का इत्येतत्तात्पर्यम् एवेति ॥ अचिन्त्याश्च तथैव दोषा इत्येतत्तात्पर्य-नम् न कुत्रापीति ॥ अज्ञेत्यादितात्पर्यम् दोषेत्यादि ॥ तर्हि वाक्यस्य निर्विषयतयाऽप्रामाण्यापत्ति हरन्नेवोपसंहरति तस्मादिति । यद्यपि सोमादिशब्दवाच्यान्मूलरूपादवताररूपप्रादुर्भावपरतया

न्न्यायरत्नावल्यामिदं व्याख्यातं तथाऽपि सोमादिपदानां प्रसिद्धार्थपरत्वेऽपि 'अतो दोषवचो यत्र तद्भाव वरं वदेत्'इति ऋग्भाष्यानुसारेण 'यज्ञो वै विष्णुः' 'पशवः शिपिः'इत्यादिश्रुत्या विष्णुशब्द ज्ञादिनामत्वेनैवमपि व्याख्यातुं शक्यमिति भावेन व्याख्यानान्तरमेतदिति द्रष्टव्यम् ।

स० — व्याख्यानतो **विशेषप्रतिपत्तिरिति** । न हि सन्देहादलक्षणं भवति । पुनः प्र ान्तरेण (निष्पत्ते) निश्चयोत्पादात् । न्यायादागमात् वा शब्दशक्तिरुपबृंहणायेत्यर्थः ॥ **सर्वाः श्रुत वेष्णोरनन्तानिति** । अनेन गुणा एव श्रुताः श्रुतिषु प्रतिपादिता इति वाक्ययोजना सूचितेति ज्ञातव्यम नश्रुता अपि गुणाः सन्तीत्यनेन लब्धमर्थं दर्शयति अनन्तानिति । सुविरुद्धा अचिन्त्या इत्येतत्तात्प थनम् अलौकिकानिति । 'न कुत्रापि दोषान्' इत्यनेन दोषा श्रुताः श्रुतितात्पर्यगोचरा नैवेति यो ोक्ता भवति । 'अज्ञैर्हि तथा प्रतीताः'इत्येतत्तात्पर्यमाह **दोषवादप्रतीतिरिति** ॥ **तौ सोमाद्भ ति** । सोमेन यजेतेति तत्सोमस्य यागसाधनत्वश्रवणात् ॥ यजमानत्वमपि यागाधीनमिति प्रसि मेति भावः ।

प० — सुविरुद्धाश्चेति लोकदृष्ट्या । अश्रुता अपि रमादिचिन्त्यास्तदचिन्त्याश्चेत्यर्थः । श्र अपि दोषा न सन्ति । श्रुतत्वे कथं नेत्युक्तिरित्यत उक्तम् **अज्ञैर्हि तथा प्रतीता इति** । ननु गु ुता इति श्रुत्युक्तमात्रेण कथमुक्तशङ्कानिरासं इत्यत आह **इदमुक्तं भवतीति** । 'सोमः पवते जनि तीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णो ति श्रुतौ सोमस्य प्रकृतत्वादाह **सोमाद्भवत इतीति** । जनितोत विष्णोरितिवाक्यं तु सोमादिश ाच्यात् क्षीराब्धिशयनान्मूलरूपाद्विष्णुशब्दाभिधेयप्रादुर्भावरूपस्य विवक्षयोपपन्नमिति सन्न्यायरत्नावल् इदि कृत्वाह **इत्यादि व्याख्येयमिति** ।

या० — **सर्वाः श्रुतय इति** ॥ अनेन गुणा एव श्रुताः श्रुतिषु प्रतिपादिता इति यो सूचितेति द्रष्टव्यम् । अश्रुता अपि गुणाः सन्तीत्यनेन लब्धमर्थं दर्शयति **अनन्तानिति** । सुवि अचिन्त्या इत्येतत्तात्पर्यकथनम् **अलौकिकानिति** । न कुत्रापि दोषा इत्यनेन दोषाः श्रु श्रुतितात्पर्यगोचरा नैवेति योजनोक्ता भवति । अज्ञैर्हि तथा प्रतीता इत्येतत्तात्पर्यप्रद **दोषवादप्रतीतिरिति** ॥ **तौ सोमाद्भवत इति** ॥ सोमेन यजेतेति सोमस्य यागसाधनत्वश्रव यजमानत्वस्यापि सोमाधीनयागसापेक्षत्वादिति भावः ॥

**श्री०**— लक्षणस्यासंभवमाशङ्कते **ननु तथापीति** ।

**च०**— व्याख्यानस्य वाक्यार्थावगतिहेतुतायां महाभाष्यकारीयां परिभाषां प्रमाणयति **यथ ऽऽहुरिति** । 'षष्ठी स्थानेयोगा'इति सूत्रं व्याचक्षाणेन भाष्यकृता "एकशतं षष्ठ्यर्थाः, यावन्तो वा सं ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति ।', 'शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धाः । अस्तेर्भूर्भवती सन्देहः स्थाने अनन्तरे समीपे वेति ।', 'सर्वसन्देहेषु चेदमुपतिष्ठते । 'व्याख्यानतो विशेषप्रतिपत्तिर्न सन्देहादलक्षणमिति।' स्थान इति व्याख्यास्यामः ।" इत्यनेन व्याख्यानस्य विशेषार्थगोचरनिश्चयहेतुत्वं तदप्रतिसंहितिदशायां सन्देहान्न लक्षणाभासता इत्यभिहिततयाऽस्मदुक्तं समञ्जसमिति भावः ॥ 'सो पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनिते विष्णोः'इति श्रुतौ पूर्वं सोमस्य प्रकृतत्वादाह **सोमाद्भवत इतीति** ॥ 'जनितोत विष्णोरिति वाक्यं सोमादिशब्दवाच्यात् क्षीराब्धिशयनान्मूलरूपाद्विष्णुशब्दाभिधेयप्रादुर्भावरूपस्य विवक्षयोपपन्नमि सन्न्यायरत्नावल्युक्तं हृदि कृत्वाऽऽह 'इत्यादि व्याख्येयमिति' इत्यपि निबन्धान्तरीयो विन्यासः ।

**सु०**— **युक्त्यन्तरमाह** प्रीत्येति ।

**अनु०**— प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे ॥

**वेदो हि जीवानां मोक्षमुद्दिश्य प्रवृत्तः 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ।' इ श्रुतेः । स च भगवत्प्रीत्येकसाध्यः 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण इति श्रुतेः । अतो भगवत्प्रीत्युत्पादनद्वारा मोक्षं साधयता वेदेन तदेव जीवान्प्रति बोधनी यद्बोधे(धने)न जीवेषु भगवत्प्रीतिर्भवति । तथा च कथं परमेश्वरदूषणे तात्पर्यं स्यात् । दूष ज्ञानस्य प्रीतिसाधनत्वाभावात् । न हि लोके स्वदोषज्ञातरि प्रीतिर्दृष्टेति ।**

**वा०**—अत्र मोक्षपरत्वस्य तत्प्रतिपादकत्वरूपत्वे मोक्षस्य विषयत्वापत्त्या । 'दूषणे नैव तात्पर्य इत्यस्यालग्नकत्वापत्तेस्तद्विवक्षितमर्थं सप्रमाणकमाह **वेदो हीति** । स्वर्गादिकं भवदप्यवान्तरं प्रयोजनमिति भावः । प्रीत्येत्यभिप्रेतं सप्रमाणकमाह **स चेति** ॥ **अत इति** । न हि शा साक्षात्प्रयोजनस्य कारकं किन्तु विषयप्रतिपादनद्वारैवेति भावः ॥ **यद्बोधनेनेति** । अभिमतप्रयोजनसा च विषयतामश्नुत इति भावः ।

**प०**—**युत्त्यन्तरमिति** । न दोषोऽर्थः श्रुतेर्भवेदित्यत्र श्रुतिकृतव्याख्यानापेक्षया वेदा भगवत्प्रीतिद्वारा मोक्षार्थं प्रवृत्तत्वरूपयुक्त्यन्तरमित्यर्थः ॥ **तेषामिति** 'अदुःखमितरत्सर्वं जी एव तु दुःखिनः । तेषाम्'इति वैशेषिकनये वक्ष्यमाणश्रुतेरित्यर्थः ॥

सु० — भगवत्प्रीतिद्वारा मोक्षं साधयतो वेदस्य तद्दूषणे तात्पर्यं स्यात् न युक्तं चे
द्युक्तमित्यत आह सर्वेषामिति ।

अनु० — सर्वेषामपि वाक्यानां महातात्पर्यमत्र हि ॥

प्रकृतदोषविरुद्धत्वेन, गुणाः श्रुता इति वाक्येन वा बुद्धिसन्निधापिता गुणा अत्रे
परामृश्यन्ते। हिशब्देन तज्ज्ञानस्येश्वरप्रीतिहेतुत्वं सूचयति ॥

ननु प्रयोजनमनुसृत्य वेदस्य प्रतीतविषयपरित्यागेनाप्रतीतविषयान्तराङ्गीक
ऽयमयुक्तः । तथात्वे पुरुषार्थविरोधिनो दुर्गन्धादिग्राहकस्य घ्राणादेस्तदविषयत्वप्रसङ्ग
सुगन्धादिविषयत्वप्रसङ्गाच्च । इत्यत आह तद्विरोध इति ।

अनु० — तद्विरोधे न मानत्वं फलं मुक्तिर्हि वाक्यतः ॥

विषमोऽयमुपन्यासः । प्रत्यक्षानुमाने हि प्रयोजनोद्देशेन न प्रवृत्ते किन्तु स्वहेत
नेपातमात्रादेवार्थं बोधयतः । वाक्यं तु श्रोतृपुरुषार्थोद्देशेनैव प्रवृत्तं तदनुगुणमेव विषयं प्र
गादयेत् । उद्दिष्टपुरुषार्थविरोधिनि तु विषये प्रवर्तमानं कथं प्रमाणं स्यात् । यथा स्वर्गोद्देशे
ग्निहोत्रं विधाय 'को हि तद्वेद यद(द्य)मुष्मिंल्लोकेऽस्ति वा न वा' इति स्वर्गे संशयं कुर्वद्वाक्यम
प्रकृते च वाक्यतः सर्वेभ्यो वेदवाक्येभ्यः साध्यं फलं जीवस्य संसारान्मुक्तिरेव श्रुत्या
प्रसिद्धा । परमेश्वरदोषप्रतिपादनस्य मोक्षविरोधे(न) न वेदवाक्यानां तत्र प्रामाण्यं युज्यत इ

वा० — 'फलं मुक्तिर्हि वाक्यत' इत्यत्र वाक्यग्रहणेन वाक्यस्य फलविरोधे
मानत्वमित्युक्त्या मानान्तरे फलविरोधोऽप्रयोजक इति वैषम्यं सूचितम् । तदुपपादयितुं तत्सूचनप्रयो
शङ्कामुखेन दर्शयति नन्विति ॥ यथेति । प्रवर्ग्यप्रकरणे 'अतीकाशान्करोति' इत्येतत्सन्निधौ 'को
तद्वेद यद्यमुष्मिंल्लोक' इति वाक्यस्य श्रुतत्वेऽपि स्वर्गफलकत्वेन तत्तत्कर्मविधायकसकलविरोधित्वा
वाक्यस्याग्निहोत्रमित्युक्तोद्दिष्टस्वर्गरूपप्रयोजनविरोधित्वात्स्वर्गसंशये यथा नैतस्य तात्पर्यमित्यर्थः । संश
द्वावस्याप्रामाण्ये दृष्टान्तत्वं न तु सर्वथा । प्रवर्ग्यकाले प्राग्वंशमण्टपे धूमाकलितलोचनानामृत्वि
शास्त्रसिद्धकालान्तरभाविफलापेक्षया प्रत्यक्षधूपनिवृत्तिसाधनसद्यःफलातीकाशकरणेच्छुत्वादतीकाशम
तात्पर्ये तत्र प्रामाण्यस्येष्टत्वात् । एवं चापौरुषेयवाक्यस्य सर्वथाऽप्रामाण्ये कथं दृष्टान्तत्वमिति प्रत्युक्त

स० — को हि तद्वेदेति । यद्यपीदं वाक्यं प्राग्वंशाख्यपत्नीशालायां धूमजनितदुःखप्रहा
'दिक्ष्वतीकाशान् करोति' इति वाक्यविहितातीकाशाख्यच्छिद्राणामावश्यकत्वाय तत्स्तुतिपरमेव, ता
लिफलप्रेप्सुत्वात्पुरुषाणां न स्वर्गसंशयपरम्, अतः प्रमाणमेव, न ह्यपौरुषेयतयाऽनाशङ्कितदोषे वेदेऽप्राम
संभावयितुमपि शक्यम्; तथाप्युद्दिष्टफलविरोधित्वादापाततः प्रतीयमाने स्वर्गसंशयरूपेऽर्थे न प्रम

मित्यर्थः । अत एवाह **संशयं कुर्वदिति** । अपाततःसंशयविधायकमित्यर्थः ॥ **यथा स्वर्गेति**
ननु कथमपौरुषेयं वाक्यं उद्दिष्टफलविरोधित्वेनाप्रामाण्ये दृष्टान्तत्वेनोदाहृतम् । मैवम् । उद्देश्यफ
विरोधित्वेन संशयविधायकत्वाख्याया प्रामाण्य एव अप्रामाण्यमभिलषिताम् प्राग्वंशाख्यशालायां धू
जनितदुःखप्रहाणाय 'दिक्ष्वतीकाशान् करोती'ति वाक्यविहितातीकाशाख्यच्छिद्रस्तुतिपरत्वं तात्कालि
फलप्रेप्सुत्वात्पुरुषाणामिति न स्वर्गसंशयतात्पर्यमिति वक्तव्यं तद्वदत्रापि भगवत्प्रीतिसाध्यपुरुषार्थ
ोधिनि दूषणे न तात्पर्यमित्येतावता दृष्टान्तत्वम् ।

प० — **को हीति** । तत्को हि वेद न कोऽपि । तदिति किमित्यत आह **यदीति**
अमुष्मिन्लोके परलोके स्वर्गशब्दितं सुखं यद्यस्ति यदि वा न इति को हि वेद इति संशयं कुर्वद्वा
यथा न प्रमाणमित्यर्थः । अत एव पूर्वतन्त्रेऽर्थवादाधिकरणसूत्रे 'शास्त्रदृष्टविरोधात्'इत्यत्र को ही
वाक्यमज्ञानसंशयादिकुर्वदप्रमाणमित्युक्तं पूर्वपक्षे । 'फलं मुक्तिर्हि वाक्यत' इत्येतद्योजयति **प्रवृ**
**त्तेति** ॥ **श्रुत्यादीति** । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते'इत्यादिश्रुत्यादीत्यर्थः ।

या० — **को हि तद्वेदेति** । यद्यपीदं वाक्यं प्राग्वंशाख्यपत्नीशालायां धूमजनितदुःखप्रहाण
दिक्ष्वतीकाशान् करोति'इति वाक्यविहितातीकाशाख्यच्छिद्राणामावश्यकत्वाय तत्स्तुतिपरमेव तात्कालि
फलप्रेप्सुत्वात्पुरुषाणां न स्वर्गसंशयपरमतः प्रमाणमेव । न ह्यपौरुषेयतयाऽनाशङ्कितदोषे वेदेऽप्रामा
संभावयितुमपि शक्यम् । तथाऽप्युद्दिष्टफलविरोधित्वादापाततः प्रतीयमाने स्वर्गसंशयरूपेऽर्थे न प्रमा
मेत्यभिप्रेत्येदमुक्तमिति ध्येयम् । अत एवाह **संशयं कुर्वत् इति** ॥ आपाततः संशयप्रतिपाद
मेत्यर्थः ॥

श्री० — **पुरुषार्थविरोधिन इति** ॥ पापापादकत्वादिति भावः ॥ **सुगन्धादीति**
न्मात्रेत्यर्थः । पुण्यरूपपुरुषार्थानुकूलत्वादित्यर्थः ।

**सु० — ननु याथार्थ्यं प्रामाण्यं न फलवत्त्वम् । सत्यम् । तस्यैव याथार्थ्यस्य विष**
**वेशे(षा)षेऽवधारणोपायत्वेन फलस्यानुसरणात् । फलाविरोधिनि विषये वाक्यानां याथार्थ्यस्य**
**नेश्चितत्वात् । वक्ष्य(ति)ते चैतत्प्रयोजनाधिकरणे ।**

**नन्वस्तु पौरुषेयाणां वाक्यानामियं व्यवस्था । पुरुषो हि परप्रयोजनेन प्रयुक्तो वाक्य**
**मुच्चारयंस्तदीयहिताहितप्राप्तिपरिहारानुगुणार्थमेव वदेत्; तद्विरुद्धं तु वदन्ननवधेयवचनः स्यात**
**अपौरुषेयं तु स्वभावादेवार्थं प्रतिपादयति प्रत्यक्षादिवदेव । तत्र बाधकप्रत्ययादेव विषयप्रच्य**
**नं युक्तम् न प्रयोजनवैगुण्येनेति ॥ मैवम् । प्रयोजनानुद्देशिनोऽनुपादेयत्वप्रसङ्गात् । य**
**पुरुषाभावेऽप्यर्थं प्रतिपादयति तथा प्रयोजनोद्देशोऽपि कथं न स्यात् ।**

किञ्च न मोक्षोद्देशेन वेदप्रवृत्तिरानुमानिकी किन्तु स्वयमेव वेदेनोच्यते। चाग्निना सिञ्चेदितिवद्योग्यताविरहादप्रामाण्यमपरिहार्यम्।

सिद्धान्तविशेषं तूत्तरत्र वक्ष्यामः।

वा०— ननु विषयविशेषे याथार्थ्यावधारणोपायत्वं फलस्य कुतः। तथात्वे फलवि प्रत्यक्षादीनां याथार्थ्याभावापत्तेः। 'फलवत्त्वं न चास्माभिः प्रामाण्यं हि विवक्षितम्। तृणादि किञ्च फलवत्त्वं निगद्यते' इति भाष्यवचनविरोधापत्तेश्चेत्यतो वाक्यानां फलाविरोध्यर्थे नैव याथ निश्चयान्नानुपपत्तिरित्याह फलेति॥ ननु वाक्य एवायमपि निर्बन्धः कुत इत्यतः सङ्गतिग्रहणसापे वाक्यस्य बोधकत्वात्पदानां चेष्टसाधन एव गृहीतसङ्गतिकत्वाद्युक्तः परार्थवाक्य एवायं निर्बन्ध इत्य फलवत्त्वस्य वाक्यप्रामाण्यव्यापकताया: स्पष्टं भाष्यकारेणैव 'याथार्थ्यमेव मानत्वमपि वाक्यं प्र मानत्वमेति' इत्यादिना व्युत्पादनान्नानुपपत्तिरित्याह वक्ष्यते चेति॥ ननु वाक्यस्य स्वयमचेतनस्य पुरुष प्रयोजनोद्देशः कथमुपपद्यत इत्यतोऽर्थप्रतिपादनस्य पुरुषव्यापारत्वादर्थप्रतिपत्तिकरणस्य वाक्यस्य भावेऽपि प्रतिपादकत्ववत्प्रयोजनोद्देशोऽपि स्यादेवेति प्रतिबन्द्या तावत्समाधत्ते यथेति॥ ननु प्रति करणे वाक्ये प्रतिपादकत्वमुपचारेणैवोच्यते प्रयोजनोद्देशस्याप्यौपचारिकत्वे प्रकृतप्रयोजनासिद्धि श्रुतिसिद्धे प्रयोजनोद्देशे काऽनुपपत्तिरित्याशयेनाह किञ्चेति।

ननु तथाऽप्यचेतने प्रयोजनोद्देशः कथमिति सुहृद्भावेन पृच्छन्तं प्रति 'द्रष्टारो वे हि सन्ति वाच्यानि चाञ्जसा। नित्यो द्रष्टा च वाच्यश्च भगवानेव च स्वयम्' इत्यादिना द्रष्टृपु वक्ष्यमाणात्तत्प्रयोजनोद्देशोऽपि नानुपपन्न इत्याशयेनाह सिद्धान्तविशेषं त्विति॥ यद्वा। तथाऽपि प्रतिपादकत्वप्रतिबन्दी तावद्ब्रूम। किञ्च श्रुतिसिद्धोऽपि प्रयोजनोद्देशः कथमचेतने व्युत्प इति सुहृद्भावेन पृच्छन्तं प्रत्याह सिद्धान्तविशेषं त्विति। नोत्पादकमेव कारकम्। तथा गगनमित्यादौ गगनादीनामकारकत्वप्रसङ्गात्। किन्तु धात्वर्थाश्रयः कर्ता तद्विषयः कर्मेत्यादि,आ नाकाङ्क्षि एव च तदन्वितत्वानन्वितत्वयोः प्रयोजके न तु कार्यत्वाकार्यत्वे। अत एव कश्चि कर्माद्यन्वितः कश्चिन्नेति युज्यत इति सिद्धान्तविशेषं 'नित्यवागपि, वाच्यवक्तृविहीना स्यात्' इत्य ख्यानाशयत्वेन वक्ष्याम इत्यर्थः। एवं चापौरुषेयवेदेऽपि वक्तृसद्भावेन प्रतिपादकत्वप्रयोजनोद्देशादि इत्येव परिहारः। अत एव 'नित्यवागपि, वाच्यवक्तृविहीना स्यादि' त्यापादनं 'द्रष्टारो ही' त तदुपपादनं चोत्तरत्र युज्यते। अन्यथा तदनुपपत्तेः। परं प्रति तु प्रयोजनोद्देशतदनङ्गीकारयोः श्रु रूपसाधकानुपादेयत्वप्रसङ्गरूपबाधकोक्तिः प्रतिबन्दीमात्रेणोपपत्तौ किमधिकेनेति नैतत्परिहारो भावः।

स० — **तस्यैवेति** । एकस्यैव वाक्यस्यानेकार्थप्रसक्तौ कस्मिन्नर्थे याथार्थ्यमिति सन्देहे यस्मि प्रतिपादिते वाक्यस्य सफलत्वं तस्मिन्नर्थे याथार्थ्यमिति नियमस्यैवाभावात् फलानुसरणं व्यर्थमित्यत **फलाविरोधिनीति** ॥ ननु फलाविरोधिन्येव विषये वाक्यानां याथार्थ्यस्य निश्चितत्वादिति कोऽभिप्रायः? किं फलवत्त्वमपि याथार्थ्यं, उत फलवत्त्वं याथार्थ्यव्यापकम् । नाद्यः विषयसत्त्व- याथार्थ्योपपत्तौ फलवत्त्वस्याप्रयोजकत्वात्, न द्वितीयः तृणादिदर्शनस्य फलवत्त्वाभावेऽपि याथार्थ्य- कृतत्वादित्यत आह **वक्ष्यति चैतदिति**। 'नात्र फलवत्त्वं प्रामाण्यं अपि तु तत् व्यापकम् । न च दिदर्शने व्यभिचार इति वाच्यं, वाक्यप्रामाण्यस्यैव व्याप्यत्वाङ्गीकारात्। न च व्यभिचारतादवस्थ्य- ति वाच्यं, गृहीतसङ्गतिकानामेव पदानां बोधकत्वेन सङ्गतेश्चेष्टसाधन एव गृहीतत्वात् याथार्थ्यस्य विशेषव्यवस्थापकत्वाच्च । यत्र याथार्थ्यं तत्र फलवत्त्वमितिव्याप्तेर्व्यभिचाराभावात् । उक्तं त्वं याथार्थ्यस्य' इत्येतत्प्रमेयं प्रयोजनाधिकरणे वक्ष्यत्याचार्य इत्यर्थः । ननु तथापि ज्ञातज्ञापक- व्यभिचार इति चेन्न जिज्ञासितयोग्यसन्निहितार्थप्रतिपादकस्यैव वाक्यत्वेन विवक्षितत्वेन ज्ञात- वाक्ययाथार्थ्यलक्षणविशिष्टव्याप्यस्यैवाभावेन नानुपपत्तिरिति भावः ॥ यद्वा नन्वस्तु फला- विषयप्रतिपादकत्वं वाक्यानां तथाप्यवान्तरफलभूतस्वर्गाविरोधिनि धर्मादौ तात्पर्यमस्तीत्यत **वक्ष्यते चैतत्प्रयोजनाधिकरणे इति** । 'मानत्वमेति तत्रापि यत्संपूर्णप्रयोजनम्' इति इत्यर्थः । संपूर्णप्रयोजनं महत्प्रयोजनमित्यर्थः । तथा च तदविरोधिन्येव वाक्यस्य तात्पर्य मिति सिद्धमिति भावः

ननु प्रयोजनोद्देशस्येच्छाविशेषत्वात् तस्य च वक्तृपुरुषद्वारैव वक्तव्यत्वात् वेदस्यापौरुषेयत्वात् प्रयोजनोद्देशित्वमित्यत आह **यथा पुरुषाभावेपीत्यादिना** । श्रुतस्यैव शब्दस्य बोधकत्वेन, य च उच्चारणाभावे असंभवात्, असंभवित्वेन चोच्चारकाभावात् अर्थबोधकत्वं न स्यात् । तत्र कारः स ममापि सम इति भावः ।

नन्वेतावता प्रयोजनानुद्देशिनो अनुपादेयत्वेऽपि नाप्रामाण्यमित्याशङ्क्यायोग्यत्वेनाप्रामाण्यमभ्युप- न् अयोग्यतायाः प्रमाणबाधरूपत्वेन प्रयोजनोद्देशेन प्रवृत्तिग्रहस्य प्रत्यक्षस्याभावेन 'विमतं वेदवाक्यं नोद्देशेन प्रवृत्तिमत् वाक्यत्वात् संमतवत्'इत्यनुमानस्य चाप्रयोजकत्वशङ्कायां प्राबल्याभावेन बाधक- त्वात् कथं अयोग्यत्वमित्याशङ्क्य 'तेषां दुःखप्रहाणाय' इति वेदवाक्येनैव प्रयोजनोद्देशेनप्रवृत्तेर्गृही- ( तस्य च प्राबल्येन तद्विरोधेनायोग्यत्वात् अप्रामाण्यमपरिहार्यमित्यभिप्रेत्याह **किंचेति** ।

नन्वस्तु प्रतिबन्द्या प्रतिवादिमुखमुद्रणम् अपौरुषेयस्य वेदस्य कथं प्रयोजनोद्देशेन प्रवृत्तिरित्यत **सिद्धान्तविशेषं तूत्तरत्र वक्ष्याम इति** । अपौरुषेयवेदेपि द्रष्टृपुरुषाभिप्रायप्रवेशोऽस्तीति ।

ारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा' इति ज्ञानपादे वक्ष्याम इत्यर्थः ॥ अपरे तु अभ्युपेत्य नुदितं; वस्तुतस्तु वेदेऽपि द्रष्टृपुरुषाणां वक्ष्यमाणत्वेन प्रयोजनोद्देशादिकं उपपद्यत एवेत्याशयेनाह **ष्टान्तविशेषमिति** । द्रष्टृपुरुषसद्भावमित्यर्थः । उत्तरत्र, 'द्रष्टार'इत्यादिक एव ।

प०— **विषयविशेषेति** । एकस्माद्वाक्यादर्थद्वये प्रतीते कुत्रार्थे तात्पर्यमिति जिज्ञासायां फलव-स्मिन्नेवार्थे तात्पर्यमित्येवं विषयविशेषावधारणोपायत्वेनेत्यर्थः ॥ **वक्ष्यत इति** । 'मोक्षार्थी ो यस्मात्स च तस्य प्रसादत'इत्यादिना 'यत्संपूर्णप्रयोजनम् ।'इत्यन्तग्रन्थेनेति भावः । अनवधेय-ोऽश्रद्धेयवचन इत्यर्थः ॥ **अनुपादेयत्वेति** । एतेन न मानत्वमित्यस्यानुपादेयत्वमित्यर्थ उक्तो ते ॥ ननु प्रयोजनोद्देशस्येदं मे भूयादित्येवंरूपेच्छाविशेषत्वात्कथमपौरुषेये वेदे तदुद्देशितेत्यत आह **ते** । यथा स्वतन्त्रपुरुषाभावे शब्दगतया सहजशक्त्याऽर्थप्रतिपादनं तथा तत्प्रमितिशेषत्वरूपं मतात्पर्यं तद्विषयत्वमेव तदुद्देशित्वं नेच्छाघटितमिति भावः ॥ मानत्वमित्यस्य प्रामाण्यमित्येवार्थमुपे-**किंचेति** ॥ **आनुमानिकीति** । वेदः प्रयोजनोद्देशिप्रवृत्तिमानुपादेयवाक्यत्वात्संमतवदित्यनु सेद्धेत्यर्थः ॥ 'फलं मुक्तिर्हि वाक्यत'इत्यस्यार्थमाह **किं तु स्वयमेव वेदेनोच्यत इति** । तेषां प्रहाणायेत्यादिवेदेनेत्यर्थः ॥ तात्पर्यमाह **तथा चेति** । तद्विरोध इत्यापादकं योज्यम् ॥ ननु तर्हि दिप्रयोजनेनैव प्रयोजनवत्त्वमस्त्वित्यत आह **सिद्धान्तेति** । यद्वा याथार्थ्यस्यैव मानत्वोपगमात्कथमेव-त आह **सिद्धान्तेति** ॥ **उत्तरत्रेति** । प्रयोजनाधिकरणे 'याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् । वमेति(व) तत्रापि यत्संपूर्णप्रयोजनम् ॥' इत्यत्र पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वादित्यादिनेति ।

या०—**वक्ष्यते चैतत्प्रयोजनाधिकरण इति** । पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वात्सङ्गति सापेक्षस्यैव वाक्यस्य बोधकत्वात् । इष्टरूपफलाभावे च तदयोगादित्युपपादकमन्यदपि तत्र वक्ष्यत ः ॥ यद्वा नन्वस्तु फलाविरोधिविषयप्रतिपादकत्वं वाक्यानां तथाऽप्यवान्तरफलभूतस्वर्गाविरो-धर्मादौ तात्पर्यमस्त्वित्यत आह **वक्ष्यते चैतत्प्रयोजनाधिकरण इति** । 'अपि वाक्यं प्रयोज-मानत्वमेति तत्रापि यत्संपूर्णप्रयोजनम्'इति वक्ष्यत इत्यर्थः । संपूर्णप्रयोजनं महाप्रयोजनमित्यर्थः । च तदविरोधिन्येव वाक्यस्य महातात्पर्यं वाच्यमिति सिद्धमिति भावः ।

'जनितोत विष्णोः'इत्यादिवाक्यस्योद्दिष्टप्रयोजनविरोध्यर्थकत्वेनाप्रामाण्यमापादितम् । तत्र नोद्देशव्यापकपौरुषेयत्वस्य वेदेऽभावात्तद्व्याप्यप्रयोजनोद्देशस्यापि तत्राभावे उक्तापादकासिद्धिरित्य-प्राशङ्कने **नन्वस्तु पौरुषेयाणामिति** ॥ ननु वेदो न प्रयोजनोद्देशवान् अपौरुषेयवाक्यत्वादिति ायोजनोद्देशाभावसाधनं न युक्तम् । वेदः प्रयोजनोद्देशवान् अर्थप्रतिपादकत्वाल्लौकिकवाक्यवदिति

नुमानपराहतत्वादित्याशङ्कायामाह **अपौरुषेयं त्विति** ॥ तथा च प्रत्यक्षादौ व्यभिचारात्स्वभावे-
यथासिद्धेश्च नोक्तानुमानपराहतिशङ्कावकाश इति भावः ॥ नन्वेवं वेदस्य स्वभावादेवार्थप्रत्यायकत्वे
हि तद्वेदेत्यादिवाक्यानामुद्दिष्टप्रयोजनवैगुण्येन विषयप्रच्यावनमनुपपन्नं स्यादित्याशङ्कायामिष्टापत्ति-
माह **बाधकप्रत्ययादेवेति** ॥ **अनुपादेयत्वप्रसङ्गादिति** । तथा च वेदः प्रयोजनोद्देशवान्
देयवाक्यत्वादित्यनुमानमत्राभिप्रेतम् । तत्र चानुकूलतर्कोक्तिरियमिति ज्ञातव्यम् । ततश्च नोक्तापाद-
सिद्धिरिति भावः । ननूक्तापौरुषेयत्वानुमानेन सत्प्रतिपक्षताऽस्येत्यत आह **यथा पुरुषाभाव**
। यथा वेदस्यार्थप्रतिपादकत्वं स्वाभाविकं तथा प्रयोजनोद्देशोऽपि स्वाभाविक एवास्तु । वाक्य-
जनोद्देशस्य तत्साधकार्थपरत्वरूपत्वात् । तस्य च स्वाभाविकत्वे बाधकाभावात् । तथा चापौरुषेय-
मानमप्रयोजकमन्यथासिद्धं चेति भावः ।

नन्वस्तूक्तानुमानेन वेदे प्रयोजनोद्देशसिद्धिः । तथाऽपि न मोक्षरूपप्रयोजनोद्देश-
ः । तत्साधकाभावात् । तथा चापादकासिद्धिरेव । न च वेदो मोक्षोद्देशेन प्रवृत्तिमान् तदितरा-
दुपादेयत्वादिति सामान्यव्याप्तिमूलकमनुमानमेव तत्साधकं भविष्यतीति वाच्यम् । अस्यापि 'जनि-
विष्णोः'इत्यादिश्रुत्यर्थविरुद्धार्थविषयकत्वेन बलवत्या तया बाधितत्वादित्यस्वरसादाह **किञ्चेति** ॥
**मेव वेदेनेति** । 'तेषां दुःखप्रहाणाय'इत्यादिरूपेणेत्यर्थः । अत्र स्वयमेव न तु व्याख्यातृप्रयत्न-
श्येत्यनेनास्य निरवकाशतासूचनेन प्राबल्यमुपपादितमिति ज्ञातव्यम् ॥ **अपरिहार्यमिति** । मोक्षो-
वेदप्रवृत्तेरानुमानिकत्वे कथञ्चिज्जनितोत विष्णोरित्यादिश्रुतेः प्रबलतया बाधकत्वेनापादका-
ऽप्रामाण्यं परिहर्तुं शक्यम् । न श्रौतत्वे । तस्याः श्रुतेर्निरवकाशतया बलवत्त्वेन तद्बाधितायाः दोष-
योग्यताविरहेणाप्रामाण्यं न परिहर्तुं शक्यमिति भावः ।

अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु वेदेऽपि द्रष्टृपुरुषाणां वक्ष्यमाणत्वेन प्रयोजनोद्देशादिकमुपप-
एवेत्याशयेनाह **सिद्धान्तविशेषमिति** । अपौरुषेयेऽपि द्रष्टृपुरुषसद्भावमित्यर्थः । उत्तरत्र
रो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा'इति ज्ञानपादे ।

**श्री०— किञ्च न मोक्षोद्देशेनेति** । मोक्षोद्देशेन वेदप्रवृत्तेः; 'वेदो मोक्षोद्देशेन प्रवृत्तिमान्
रानिच्छूपादेयत्वात्'इत्यनुमानसिद्धत्वं यद्युच्यते, तर्ह्यनुमानापेक्षया श्रुतेः प्रबलत्वेन, 'जनितोत
ो'रित्यादिश्रुतिविरोधेन तत्प्रीतिद्वारा मोक्षोद्देशित्वं न स्यात् । न ह्येवमुच्यते । किं नाम,'यस्य
ात्' 'तेषां दुःखप्रहाणाय'इति श्रुत्या स्वयमेवोच्यत इत्यर्थः ॥ **तथा चेति** । मोक्षरूपप्रयो-
शाभाव इत्यर्थः ॥ **योग्यतेति** । 'तेषां दुःखप्रहाणाय', 'यस्य प्रसादात्'इत्यादिश्रुतीनां
ार्थकत्वादप्रामाण्यमित्यर्थः ।

( इति असंभवपरिहारः । )

